श्रीकाशीजीमेमहल्लाघुघुरानासामाकीगल्लीश्रीयुतबाबूहरखचंदजीकेबाडेमेदु
र्गाप्रसादकटारेकेगणेशयंत्रालयमेउत्तरपक्षावलीछापीगईलीखारामदासकाछा
पनेवालागोपाल ः जिस्कोलेनाहोयउसेकुंजगलीकेपच्छीमफाटककेपा
सदुर्गाप्रसादकटारेकेदुकानपरमिलैगी ॥

उ.प. श्रीगणेशायनमः विद्याविनोदचतुरंविद्यादंविघ्ननाशनं तथाविधमनुदेवंगुरुंवाग्देवतांभजे १ प्रश्नावल्यांहोरिलस्ययेप्र
१ श्नाःपंडितैःकृताःतेषांसदुत्तरार्थायक्रियतेह्युत्तरावली २ तत्रतावत् धातोस्तन्निमित्तस्येतिकिं ओयतेऔयतेतिमूलोक्तदोषना
शायनयकीतिन्यासःतत्समाधानंआचारक्विवंतप्रकृतिककर्तृक्विवंतगोग्लौशब्दादिभ्यःतत्रसाधुरितियतिगोयंग्लौयमित्या
दितथाविजंतभूधातोर्भौइत्यस्माद्यतिभौयमित्यादौचधातोरेवयादिप्रत्ययभिन्नमित्यस्यवांतादेशामाभूदितिनयकीतिन्यासो
दुष्टःइकोगुणवृद्धीवदव्रजेरितिओतश्यन्यनीतिआदेचउपदेशसूत्रस्यभाष्यप्रामाण्यादेजंतेभ्यआचारक्विपोऽभावेतुभो
यमित्यादावावश्यंदोषात् सन्न्यासोदुष्टएवअतःअस्यत्समाधानंविभावयंतुसुधियइत्युक्तंतत्रसमाधानांतरमुक्तंभाष्यवि
रुद्धंतुधातोरित्यवयवषष्ठ्यैवउशंभुस्तमिच्छतिऊयतिआऊपतिओयतिलङिऔयदित्यादौयथान्यासेनवांतादेशःक्यजंत
धातोरवयवस्यैवैचोयादिप्रत्ययनिमित्तत्वाभावान्नयकीतिन्यासेतुस्याद्दोषःगव्यतिनाव्यतिइत्यादौतुव्यधिकरणकषष्ठ्या
चित्योवांतादेशःयदितन्निमितस्येत्यनेनयादिप्रत्ययभिन्ननिमित्तस्यैवैचोवांतादेशआवृत्तिरिष्यतेतदास्वाभाविकस्यैवैचोवांता
देशेसिध्यतिगव्यतीत्यादिसामान्यस्यव्यावृत्तौतुनसिध्येदितितत्वप्रकाशिका यांस्पष्टंओकितद्धितयोःइतिन्यासेयादौतद्धिते राम.
चवांतादेशनिषेधेतुवाभ्रव्यंगव्यतीत्यादिनसिध्येत्तन्नयकी ति न्यासेओयतेइतिनकुःनीतिन्यासेगव्यमित्यादिचनसिध्येत्वांतोपि १

लंइतिचकृतेयद्वाइप्रत्ययेस्वरबहुलमितिकृतेयांनवांतादेशावाहुलकाइतिसिद्धौवहूनांवांतविधीनांवैयर्थ्यंतथापिल।
क्ष्यानुसरणक्लेशइतिसुहृद्भूत्वाचार्यस्तथानकृतवान् अतएवपाणिनीयानांक्वचित्स्वरक्यकारइत्य पास्तंलक्षणस्यअस्मा।
दाद्युद्देशेनकृतत्वात् एतदेवैकवसुष्काणांतेविनालक्षणंलक्ष्यदर्शनमाशंक्यनासूयाकर्तव्याऽत्राऽनुगमइतिभाष्यादन
नुगमएवलक्ष्यदर्शनंशरणंसति प्रामाण्यइतिबोध्यंयत्तूक्तंबीनोयीत्यस्यतत्सूत्रस्यभाष्याद्धातुविषयकत्वाद्धातोरित्यार
भ्यमृषिणेतितद्धातुरित्येतत्सूत्रस्यभाष्यविरुद्धंनिर्मूलत्वंचतथाहिप्रकृतिसूत्रेभाष्येएवकारःकिमर्थः नियमार्थः नैत
दस्तिप्रयोजनंसिद्धेसत्यारभ्यमाणउत्तरेणैवकारंनियमार्थंभविष्यतिइष्टतोवधारणार्थः तर्हिशंकव्यमित्यादौ
यदिस्यादित्युक्तेः यत्तुअत्रसिद्धंबहिरंगपरिभाषायाऊठ्ग्रहणंज्ञापकंइतिभाष्येदूषणंदत्तंऊठ्ग्रहणंकथंज्ञाप
कंप्रौहेत्यादौविभक्त्युदात्तार्थंतदकरणेऊठिदंपदाद्यपुम्रैद्यु भ्यःपरासर्वनामस्थानविभक्तिरुदात्तास्यादितिनप्रव।
र्तेतइत्युक्तंतदिष्टापत्तेरदुष्टंवाहस्थानेयऊठ्तस्यतेनाग्रहणमितितद्भाष्य तोलाभात्कथमन्यथाव्यूहइत्यादेरना।
भिधानमितिविभावयज्वरत्वरेत्यादिविहितेऊठिज्जूरः जूरौ तूरः तूरौइत्यादावेवतत्प्रवृत्तेःतदुक्तंपरिभाषेन्दुशेखरेप्रौहइत्याद्य

उ.प. न्येत्तुपरिभाषाशयंविनानविधानं वर्णयंति ऊठिदमित्यत्रवविदमेवास्तुकोर्थः अस्यदीर्घऊकारोयत्रवाशब्दस्यह्रस्वउ
२ कारोयत्रततःपराऽसर्वनामस्थानविभक्तिरुदात्तास्यादिति आद्यस्यज्रूरः ज्रूरेत्यादिद्वितीयस्यविश्वोह इत्यांद्युदाहरणंव
श्ववाश्ववौहूहूकृते लोपोव्योरितिवलोपः उश्चऊश्चेतिदीर्घह्रस्वयोर्द्वंद्वे कृतेषष्ठीतत्पुरुषः ववास्थानेयौदीर्घह्रस्वौ।
उकारौताभ्यांपराऽसर्वनामस्थानविभक्तिरुदात्तेतितदर्थः वोइदमित्यत्रावादेशः इदमपिसमाधानंसंदिग्धं क्लि
ष्टंलोपोव्योरितिसूत्रस्यवकारप्रत्याख्या नपरभाष्यविरुद्धंचेत्यरुचे रुक्तंदीर्घोच्चारणमूठोस्यांपरिभाषा
यांज्ञापकंसंप्रसारणोतिमित्ते गुणेवृद्धिरेचीतिवृद्धौविश्वौहइत्यादिसिद्धेरितितदपिचिंत्यंदीर्घोच्चारणस्यैधत्यूह।
स्वितिविशेषणार्थस्यशेखरेस्फुटंजनानवतिइतिजनौरित्याद्यर्थमुक्तत्वात्ज्वरत्वरेत्यत्रापिह्रस्वकरणेअस्यचूरित्या
द्यसिद्धेः एतेनोठिदमित्यत्रापिह्रस्वएवपठ्यतेतत्पराऽस्तुकिंचचतुरनुडुहोनद्यजादीत्यस्याग्रेवाहइतिपठित्वावाहः
परेनद्यजादौउदात्तेस्तः इत्येवसिद्धेऊठ्ग्रहणंव्यर्थमित्युक्त्वावाहानद्यांउदात्तविधानाद्वाहइतिङीब्विधिरपिनापूर्व राम:
इतिभाष्याशयः तस्यापिअंतोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे इत्यस्याग्रेपाठेनज्ञापकपर। ४ ४ ४ २

भाष्यप्रामाण्येन तस्य अव्यवस्थितविभाषापरत्वादिष्टस्वरसिद्धिरित्युक्तं तदपि न वाह इत्युक्ते ऊठिदमित्यत्रोठाकरणोऽन्तरङ्
त्वादौ स्वरासिद्धिः तत्रोठि कृते वाह इत्यस्यापि करणे वाह इति ङीविधिज्ञापकसिद्ध इति लाघवं यथायाति तथापित्व
नभिधानमेव शरणं तत्रापि कथमन्यपा वाहो ङीपूज्ञापका हूडेति तर्कयतां तस्यापि यूस्त्र्याख्याविति नदीत्वात् कथं वाश्रीमद्भिः
प्रवाहैरित्यादौ परादिवद्भावे न वाह इत्यनेन प्राप्तः स्वरो बाधान्ति किं च तस्य वाह्यप्रयत्ने इत्यस्य वाह इत्यादौ त्वदुक्तव्यवस्थित
विभाषाश्रयणं च प्रमाणं किं चोठस्वरस्य विश्वौह इत्यादौ इष्टत्वज्ञापकपरभाष्यविरोध एवेति तत्स्वराभिधानस्य भाष्यका।
राणभिप्रेतत्वमेव लभ्यत इति दिक् २ यत्तु विभक्तेश्चेति व्यर्थं प्रदेशाः क्वचिद्यथा पथं सुपिङ् ग्रहणे न सुग्रहणेन चेष्टसि
द्धेः अष्टन इत्यत्र सुपीत्येवास्तु सदा दीनामङ् इत्यत्र सुपीत्यनुवृत्तौ यत्र तत्रेत्यादावव्याप्तिस्तु प्राग्दिशीयानां सुसंज्ञयैव।
सिद्धे सुपि चेत्यत्र सुपि यमिङ् इति न्यासेन तर्हीत्यादौ अदोषः सुपो धात्विति सुपो लुक् सुप्तिङन्तावित्यनुदात्तता च न त्रलन्त
सिलादीनां विधानसामर्थ्यात् अलादौ लित्करणाच्चेति विभावयं तु सुधिय इत्युक्तं तत्र विभक्तिसंज्ञा त्रलादौ प्रयोजन
मिदमस्तिदमइशादेश उडिदमिति इदंस्वरेणान्तस्योदात्तत्वमिति प्राग्दिशीय इत्यत्र भाष्ये स्पष्टं तत्तस्तृतीयहित्वमेत
ज्ञाप्य गौरवादिति च कैय्यटे तत्र किं यदुक्तं त्रलादीनां सुसंज्ञायां सुपो धात्विति लुक् तेषां विधानसामर्थ्यादिति तन्न तद्धिते

उ.प. सतिप्रातिपदिकसंज्ञातस्यांचतद्धितलोपइतिसन्निपातविघातादेवालुक्सामर्थ्येनऽलुकुकर्त्तुमशक्यंअव्ययसंज्ञा
३ यांतद्धितांतात्सुपोलुक् एवंप्रयोजनसत्वात्तस्मादित्याद्यर्थेतदित्यादेःप्रयोगफलस्यसत्वात्प्राग्दिशइत्यत्रकैय्यटेउ
क्तं ननुमध्येपवादइतिन्यायादनुदात्तौसुप्पितावित्येवंस्वरंविभक्तिस्वरोवाधतेननुलित्स्वरंलित्स्वरएवानुपरत्वाद्विभक्ति
स्वरंवाधतेनैषदोषःऊडिदमित्येनत्सूत्रंलितीत्यत्रानुवर्त्ततेलित्स्वरंवाधित्वाविभक्तिस्वरोभवतितृतीयादिग्रहणेन
तृतीयामारभ्यप्राग्दिशःप्रत्ययागृह्यन्तइतिकिंचदानीमोमस्येत्संज्ञानिषेधायविभक्तिसंज्ञेतिस्पष्टंतत्रभाष्येअ
न्यथामिदंचइत्यन्तादचःपरंस्यादितितत्रकैय्यटेस्पष्टंदानीमादंनस्वीकारेदोषाभावे प्युक्तस्थलेतसउदात्तत्वफ।
लंविभक्तिसंज्ञायाःप्रयोजनंइतिभाष्येस्थितंप्राग्दिशीयानांसुप्संज्ञायांसुप्तिङ्तुस्माइतिदानीमोमस्येत्वंनऊडिद
मित्यत्रापिसुप्येवसंवध्यतेसावेकाचइत्यत्रापिविभक्तिस्थानेसुप्करणादित्यदोषइतिचेन्नहिअष्टाविवाचरति।
त्वाचारक्विंवंतादष्टनशब्दाल्लुटस्तिपिप्राप्तेवाधित्वापरत्वात्प्रातिपदोक्तत्वाद्विभक्तिग्रहणसामर्थ्याच्चनस्यात्वेष्टानी
तिकृतेतन्नस्यात्तस्मादष्टनइतिविभक्तिग्रहणंकार्येतसादीनांविभक्तिसंज्ञेष्टव्येतिकेचित् अथवाष्टनआसु। एम
प्तिङो त्येवास्तुतसादीनांसुप्संज्ञैवास्तुविभक्तिश्चेतिनकार्येमित्यन्येयदि विभक्तिश्चेन्न॥ ३

त्यस्यप्रत्याख्यानेतस्यवाग्रहणंनहिस्मइतिलाघवात्प्राग्दिशीयानांमाभूत्तांविभक्तिसुसंज्ञेकिंतुत्यदाद्यत्वफलायत्यदा
दीनामप्राग्दिशीयत्वसादेवेतिपठ्यतांप्राग्दिशीयइतिनकर्तव्यंसुपिपभौतिचर्तथाष्टनइत्यत्रसुप्तिङे वासुदानोमोम
स्यथानत्वंतथोक्तमेवइतइत्यंतोदात्तस्तुतत्वप्रकाशिकायांस्पष्टं ३ घुणघूर्णिभ्रमणेऽत्रोपधायांचेतिदीर्घसिद्धेदीर्घो
च्चारणंप्रक्रियालाघवार्थमितिशेखरग्रन्थःसचायुक्तःमूर्छादिषुदीर्घाकरणेऽत्रलेखकप्रमादेनदीर्घकरणात् उर्जेर पिदी
र्घोच्चारणंतथैवोपधायांचेतिसूत्रकरणमेवलाघवाद्घूर्णेनेर्नुलोपश्चमहतिह्रस्वेतिवचनादुकारस्यैवदीर्घइत्यलं ४ षा
त्पदांतात् पदांतात्षकारात्परस्यनस्यणत्वंनेत्यर्थः निष्पानंदुष्पानंअत्रकृत्यचइतिवाभावकरणयोरितिवाणत्वंप्रा
प्तेऽत्रमनोरमायांपदांतात्किंपुष्णातीतिप्रत्युदाहृतंतदयुक्तंष्टुत्वेनसिद्धेरितिशंकातत्समाधानंतुरषाभ्यामितिसूत्रेभ
भाष्येवकारग्रहणमुत्तरार्थंषात्परस्यनस्यष्टुत्वेननिर्वाहात्एवञ्चषात्पदान्तादित्यनेनापिष्टुत्वस्यैवनिषेधःपदा
न्तग्रहणाभावेपुष्णातीत्यत्रष्टुत्वनिषेधेरूपासिद्धिःस्यादेवेतिपण्डिताः वस्तुतस्तुषग्रहणमुत्तरार्थमितिरषाभ्यामि
त्यत्रभाष्येऽदर्शनाद्बाध्यसामान्यचिन्तयापदान्तषात्परस्यनस्यणत्वमात्रंनिषिध्यतइत्यर्थःनचषरसामित्यत्रापिनि
षेधस्यादितिवाच्यम् पदेऽन्तःपदान्तइत्येवभाष्येसुसर्पिष्केणेत्यादौणत्वसिद्धयेव्याख्यानात् पदस्यनकारस्यैव

उ·प· णत्वनिषेधात् एवञ्च पदान्तग्रहणाभावे सुसर्पिष्केणेति प्रत्युदाहर्तुमुचितमिति भाष्यदर्शिनः नहि सुसर्पिष्केणेत्यत्र ष्टुत्वं।
४ लभ्यमिति दिक् ५ ददातिदधात्योर्विभाषा अनुपसर्गादेतयोर्विभाषा शः श्याद्व्यधेति णस्यापवादः शपश्लौ तु जुहोत्यादित्वाच्छ्लु
पः श्लुश्नाविति द्वित्वं ददः दधः पक्षे णः दायः धायः इति अनुपसर्गादित्येव प्रदः प्रधइति मूलं तत्र पाणिडताः इदं सूत्रं मा।
स्तु दद दाने दध धारणे आभ्यां पचाद्यच् ददः दधः इति श्याद्व्यधेति णे युक्ते दायः धाय इति च सिद्धेरित्याशंक्य स
माहितम् अचिकृतेन ददः अददः अत्र नञ्तत्पुरुषे तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या।
इत्यनेनाव्ययपूर्वपदप्रकृतिस्वर इष्यते तमवाधित्वा अच्कावशक्तौ अजन्तं कान्तं चान्तोदात्तं स्यादशक्तावित्यन्तो।
दात्तस्यादिति सूत्रम् इति वस्तुनस्तु समासात्प्रागेवान्तरङ्गत्वादच्कावशक्तावित्यन्तोदात्ते निर्वृत्ते सति शिष्टत्वेनाव्ययपू
र्वपदप्रकृतिस्वरः सिद्ध एव किन्तु अभ्यस्तानामादिरित्याद्युदात्तार्थं प्रददः प्रदधः इति व्यावृत्त्यर्थं दाञ् धाञोरपि ददध
योंसिध्यर्थं च वचनं तदपि रूपद्वयम् विभाषाग्रहणं विनैवानुबन्धवैरूप्याद्वासरूपसूत्रेण णशप्रत्ययाभ्यां सिद्धं विभा।
षाग्रहणं नानुबन्धकृतमसारूप्यमिति ज्ञापनार्थमिति वा सरूपसूत्रे भाष्ये स्पष्टम् ६ चितः अन्त इत्यनुवर्तते चितो एम·
ऽन्त इत्यर्थः अत्र वार्तिकम् चितः सप्रकृतेर्बह्वकजर्थमिति शेखरे अस्यार्थः चित्स्नत्यपप्रकृतेरन्त उदात्त इति तदर्थो। ४

नन्तुप्रत्ययमात्रस्यान्त इति अत्र चाकचश्चित्वं ज्ञापकमन्यथाकचएकाचूकत्वेन प्रत्ययस्वरेणैवोदात्तत्वे सिद्धे तदर्थस्य
र्थं सदत्र ज्ञापकमिति तस्यानुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमह्न्विङोरित्यत्र शेस्वरे तु अस्मात्परं लसार्वधातुक
मनुदात्तं न्हुङ् अधीङौ वर्ज्जयित्वेत्यर्थः रुणद्धीत्यत्र श्नमोमित्वेन परश्चेत्यस्य वाधे तत्सन्नियोगशिष्टप्रत्ययाद्यु
दात्तवाधनमित्युक्तम् अयं ग्रन्थः परस्परविरुद्धः यथामित्वेन परश्चेत्यस्य वाधे तत्सन्नियोगशिष्टप्रत्ययाद्युदात्तत्व
स्यापि वाधः एवमकच्यपि प्राकृटेर्ग्रहणेन परश्चेत्यस्य वाधे तत्सन्नियोगशिष्टप्रत्ययाद्युदात्तस्याप्राप्त्याऽकचश्चि
त्वस्य ज्ञापकतावर्णनमयुक्तमिति विरोधः अत्र नवीनैरित्थं परिह्रियते उभयशब्दस्य सर्वादौ पाठो व्यर्थ इति प्र
घट्टके भाष्यग्रन्थे कश्चेदानीमकचोः स्वरे रूपे वा विशेषो सतोस्तु त्वकाऽकचि सन्नियोगशिष्टन्यायस्याश्रयणे प्रमाणा
भाव इत्यन्यदपि विभावयन्तु सुधिय इति यत्त्वत्रोक्तं चितः स्थाने चित्प्रत्ययप्रकृतेरन्तोदात्त इति वार्त्तिकार्थस्तन्न शो
भनम् अपूप्रभृतिप्रत्ययस्य कुण्डनजादेर प्रत्ययस्य चेह ग्रहणमिति कैयटविरोधात् वहुकजर्थमिति मतोक्तमुपा
दाय वहूकचोऽन्तोदात्तत्वे कार्य्ये चितः सप्रकृतेरिति वचनमिति कैयटविरोधाच्च वहूकच्प्रत्ययवती या प्रकृतिस्तस्याऽन्
तउदात्त इत्येवार्थो वार्त्तिकस्य एतद्वार्त्तिकप्रत्याख्यानपरभाष्यप्रामाण्याच्चायमर्थः नथा हि तत्तर्हि वक्तव्यं न वक्तव्यं पूर्वे सूत्रनिर्द्दे

उ॰प॰ ५ शत्वात् चित इति भाष्यं चित्त्वात्समुदायोऽन्तोदात्त इत्यर्थः कुणिऽनजादयोपि व्यपदेशिवद्भावाच्चिदन्ता उच्यंत इति कैयटः चि
त इत्यनेन न चित्त्वतोऽग्रहणेऽकचएकाचुकत्वेन प्रत्ययस्वरेणैवान्तोदात्तत्वं सिद्धमतस्य चित्करणाच्चित्त्वत इत्यर्थो लभ्यते
सप्रकृतेरिति बहुकजर्थमुपादीयते तेन कुण्डिनप्रकृतिष्वदोष इत्युक्तम् चित इत्यनेन न चित्त्वतो ग्रहणे पुत्रकाम्या।
दिषु चित्प्रत्ययान्तेषूपयोगाभावेन बहुकजर्थमित्युक्तम् न चैवोदाहृतं च भाष्ये बहुचू बहुभुक्तमित्यादिष्वकचू सर्वके रु
च्चकेरित्यादि च यत्तु शेखरयोर्विरोधोद्भावनं तत्रश्नमो मित्त्वेन परस्येत्यस्य बाधेपि प्रत्यय इत्यस्य प्रकृतिरिष्यत एव

प्रत्ययत्वं विना लशक्विति शस्येत्संज्ञानापत्तेः प्रत्ययत्वे चाद्युदात्तः सन्नियोगशिष्टः केन वार्य्येत न च कचित्तु प्राकृ
टेर्ग्रहणात्स्वरश्चेत्यस्य बाधेऽकचः प्रकृतिप्रविशिष्टस्य प्रत्ययत्वे प्रामाण्यफलयोरभावाच्चित इत्यनेन न चित्त्वतः प्रकृ
तिप्रत्ययोरविशेषेण ग्रहणात्सन्नियोगशिष्टन्यायसंचारः काकदन्तपरीक्षावदाभातीति चित इति सूत्रे भाष्यस्य शम्

७ आर्द्धधातुकस्येड्वलादेः अङ्गसंज्ञानिमित्तस्य वलादेरार्द्धधातुकस्येडिति सूत्रार्थः अत्र शेखरे आर्द्धधातुकस्ये
ति किम् जुगुप्सते इति अत्र सूत्रे भाष्ये ऋत इद्धातोरिति पदमुच्चार्य्य विहितस्य वलादेरिति व्याख्ययात्र दोषाभावा एम॰
दार्द्धधातुकग्रहणं प्रत्याख्यातम् रुदादिभ्यः सार्वधातुक इति नियमादास्ते शेते इत्यादावदोष इति स्थितम् ॥ ७ ॥ ५

स्यसिचूसीयुडित्यत्र भाष्ये तु अंगस्येट् माभूदित्यार्द्धधातुके इत्यनुवर्त्य योगविभागमाश्रित्य यावानिट् स सर्वोऽप्यार्द्धधा-
तुकस्येडित्युक्तम् तत्परस्परविरुद्धं शेखरग्रन्थोऽपि भाष्यविरुद्धः अत्रेत्थं विरोधोद्धारं कुर्वन्ति पण्डिताः विधिसूत्रे प्रयो-
जनं नास्तीति प्रत्याख्यानं योगविभागार्थं तया प्रयोजनोक्तिः जुगुप्सत इति शेखरग्रन्थस्तु आर्द्धधातुकग्रहणमनुव-
र्त्योक्त इति अत्रेदं तत्त्वम् स्यसिचूसीयुडिति सूत्रस्थं भाष्यं तावदेकदेशिसूत्रकारीत्याप्रवृत्तम् एवं सन्न मे योगविभागः
करिष्यते आर्द्धधातुकस्येट् यावानिड् नाम स सर्व आर्द्धधातुकस्य भवतीति विज्ञेयं ततो वलादेरिति वलादेरार्द्धधातु-
कस्येट् भवतीति भाष्यम् आर्द्धधातुकस्य इत्यस्य प्रत्याख्याने योगविभागस्यैकदेशयुक्तत्वं स्फुटमेव शेखरोऽपि युक्त ए-
व तथाहि आर्द्धधातुकस्येति सूत्रे भाष्ये किमार्द्धधातुकस्येति पदाभावे वलादेरंगस्य प्रत्ययस्येडिति विप्रतिपत्तिं कृ-
त्वा यद्येतत्पदाभावेऽगस्येडापद्येत तत्पदसत्वेपि आर्द्धधातुकस्य पदं गतस्येडित्यापादयितुं शक्यत्वात्तत्राक्रियमा-
ण एवेष्टं विज्ञास्याम इत्युक्तम् अनेन लक्ष्यपशरणं सूत्रकारस्यापीति दर्शितम् इदन्तर्हि प्रयोजनं इह माभूत् आ-
स्ते शेते एतदपि नास्ति प्रयोजनं रुदादिभ्यः सार्वधातुके इत्येतन्नियमार्थं भविष्यति रुदादिभ्य एव सार्वधातुके इड्भ-
वति नान्येभ्य इति अत्र कैयटः सार्वधातुक एवेति नियमस्तु रुदविदेति क्त्वासनोः कित्वविधानान्न भविष्यति अनिट्स-

उ.प. नोरुदादेर्हलन्ताच्चेति कित्वस्य सिद्धत्वात् तत्त्वकोऽनिट् औपदेशिककित्वसद्भावादिति एवमपि वृक्षता अत्र प्राप्नोति धातोरि
६ तिवर्त्तते एवमपि लूभ्यां पूभ्यामत्र प्राप्नोति एवन्तर्हि विहितविशेषणं धातुग्रहणं धातोर्यो विहितः ननु च धातोः एवायं
विहितः न चायं धातोरित्येवं विहितः क्व पुनर्धातुग्रहणं प्रकृतं ऋतइद्धातोरिति तत्र हि षष्ठीनिर्दिष्टं पंचमीनिर्दिष्टेन चेह विहि
तं शक्यते विशेषयितुम् अथेदानीं षष्ठीनिर्दिष्टेनापि विहितं शक्यते विशेषयितुं शक्यमार्द्धधातुकग्रहणमकर्तुमिति
प्रकृतसूत्रे भाष्ये स्थितम् लूभ्यामित्येतत्समानमेव जुगुप्सतइत्यार्द्धधातुकग्रहणाभावेप्यदोष एव सनोऽनार्द्धधा।
तुकत्वफलं गुणाभाव एव तेनेड्गुणो नेति फलन्तु भाष्यमते। फलितार्थकथनपरं जुगुप्सतइति प्रत्युदाहरणं च व्य
पदेशिवद्भावोऽप्रातिपदिकेनेति पूर्वादिनिः सपूर्वाच्चेति योगविभागेन ज्ञापितेयमन्यथैकयोगं पूर्वात्सपूर्वादिनिरि
त्येव कुर्यात् न चात्र पृथग्योगे इष्टादिभ्य इत्यत्र सपूर्वादित्यस्यानुवृत्तिर्न स्यादेवं चानिष्टीतिन सिध्येदिति वाच्यम् ज्ञा
पकपरत्वेन विधिरिति सूत्रभाष्यप्रामाण्यादनिष्टीत्यस्यासाधुत्वात् एकयोगेपि तावता उत्तरत्रानुवृत्तौ बाधकाभावा
च्च अतएव नान्तादसंख्यादेरिति सार्थकमन्यथाऽत्रापि व्यपदेशिवद्भावेन पंचमइत्यादावपि संख्यादित्वान्नहेपर्थ्ये। एम.
स्पष्टमेवेति परिभाषेन्दुशेखरे स्पष्टम् अत्रैष विचारो मन्दप्रयोजनः ९ पूर्वत्रासिद्धम् सपादसप्ताध्याय्यामुत्तर ॥ १॥ ६

त्रास्यपादात्पूर्वंत्रपदेनतस्याग्रहणात्त्रिपाद्यामसिद्धत्वंप्रतिसूत्रमुत्तरत्रासंबंधात्फलितस्त्रिपाद्यांपूर्वंप्रतिपरमसिद्ध
मित्यर्थः एवमर्थेश्चुत्वंधुटिसिद्धंवाच्यमित्यादिवार्त्तिकानिप्रमाणानिफलंगोधुङ्ज्ञानिस्यादिसिद्धिः अन्यथापूर्वंपू।
र्वशास्त्रप्रवृत्तौघत्वजश्त्वानुनासिकेषुसत्सुभष्भावोनस्यादितिशब्दरत्नोक्तिः साविरुद्धेतिपदान्तेभष्भावस्यन्याय्यत्वा
त् तत्समाधानंजश्त्वापवादत्वेप्यनुनासिकत्वापवादत्वाभावात्तत्रकृतेभष्भावोनस्यात् जश्त्वेकृतेइत्यत्रजश्त्वाप्रा
प्तावित्यर्थइतिपण्डितोक्तिरसंबद्धाजश्त्वेकृतेइतिमूलाभावेजश्त्वप्राप्तावितिव्याख्यायादूरापास्तत्वात् वस्तुतस्तु
पौर्वापर्य्याश्रयणाविरोधेनपूर्वंपूर्वप्रवृत्त्याचर्त्वभष्भावजश्त्वानुनासिकानांप्रवृत्तौनैवानिष्टंकिंचित् किंतुघत्वेकृते
ङ्ययइतिमनोर्मस्यवत्वापत्तिरेवशेखरोक्तासुष्ठुइतिचिन्त्यंसुधीभिः अत्रयद्यपिलोकेनाहार्य्यज्ञानस्यैवप्रवर्त्तकत्वं
इष्टंतथापिशास्त्रप्रामाण्यादाहार्य्यारोपिशास्त्रप्रवृत्तावप्रवृत्तौचनियामकत्वंइतिवोद्धव्यमितिशेखरः लोकेनाहार्य्ये
त्यादिनियामकइत्यन्तमुक्तन्तस्यायंभावः यथाभूतलेघटोऽस्तीत्यादौभूतलाधिकरणकघटकर्त्तृकसत्त्वाऽत्य
न्ताभावप्रतिवन्धिकाएवमेतत्त्रिपादीस्थंशास्त्रंसिद्धमेवतत्रापित्रिपादीस्थकर्तृकसंभवज्ञानंप्रतिवन्धकम् एवं
चपूर्वशास्त्रंप्रतित्रिपादीस्थमसिद्धमित्यनुपपन्नमेवस्यादतोदर्शनरूपेलोपेऽभावारोपस्यरूपत्त्वेनमनोरथः।

उ·प· इत्यादावदोषोऽभावाभावस्यप्रतियोगिस्वरूपत्वात् नचोत्वदृष्ट्यारोरित्यस्यासिद्धत्वमितिवाच्यम् दीर्घविधिसामर्थ्या
७ दाश्रयासिद्धत्वात् अत्रसमाधानंकर्म्मणोरोमन्थइत्यादिनिर्देशेनयत्रशास्त्रान्तरदृष्ट्याऽसिद्धत्वंनास्तितत्रैवाश्रयासि
द्धत्वमत्रतुहशिचेत्येतत्प्रवृत्त्यापिरोरित्यस्यासिद्धत्वमितिनाश्रयासिद्धत्वमन्यद्विभावयन्तुपण्डिताःवस्तुतस्तुयोगपद्ये
नशास्त्रद्वयप्रसङ्गे·शास्त्रासिद्धत्वपक्षेरोरीत्यस्याप्रवृत्त्या ढ्लोपाभावेनरलोपशास्त्रस्यैवाप्रसङ्गः कार्य्यासिद्धत्वेर
लोपेहशिचेत्यतःपरत्वाल्लोपइतिदीर्घोऽपिहशिचेत्यन्तरङ्गःप्रतिपदद्वयसापेक्षवहिरङ्गःदीर्घस्यपूर्वत्रासिद्धमिति
रलोपस्यासिद्धत्वादुत्वमेव किञ्चकर्म्मणोरोमन्थइत्यादिनिर्देशेनासिद्धवचनंकिमर्थमादेशलक्षणप्रतिषेधार्थमु।
त्सर्गलक्षणभावार्थंचेतिभाष्येणतत्रत्यकैयटविवरणाभ्यांशास्त्रासिद्धत्वस्यैवाश्रयणाददोषइतिदिक् ९ स्त्रीप्र।
त्यये चानुपसर्जनइति अनुपसर्ज्जनेस्त्रीप्रत्ययेतदादिनियमोन उपसर्जनेतुभवत्येवकारीषगन्धेरपत्यंस्त्रीत्यर्थे
तस्यापत्यमित्यणि अणिञोरनार्षयोरितिष्यङि त्यणःष्यङादेशेचापिचरूपम् कारीषगन्ध्यायाःपतिःकारीषगन्धी
पतिःपरमकारीषगंधीपतिःष्यङःसम्प्रसारणंपुत्रपत्योस्तत्पुरुषइतिसम्प्रसारणंयथाऽत्रभवति तथापरमकारीष राम·
गन्ध्यायाःपतिःपरमकारीषगन्धीपतिरत्रापिभवतिस्त्रीप्रत्ययस्यपतिंप्रत्युपसर्ज्जनत्वेऽपि। ॥ १ ॥ ७

परमशब्दार्थमत्यनुपसर्जनत्वात् कारीषगन्ध्याशब्दस्यापिष्यङन्तत्वात्कारीषगन्ध्यामतिक्रान्तः इति कारीषगन्ध्येति
विग्रहे ऽतिक्रान्तार्थमप्रतिस्त्रीप्रत्ययस्योपसर्जनत्वात्तदादिनियमसत्वादति कारीषगन्ध्याशब्दस्यापि ष्यङन्तत्वान्न सं
प्रसारणम् अत्र पण्डिताः इयं परिभाषा न कर्त्तव्या ष्यङो ऽनुसर्जनस्य सम्प्रसारणमित्यादि सूत्रकरणात् अत्र समा
धानं परमाकारीषगन्ध्या यस्य स परमकारीषगंध्यः विनापि प्रत्ययं पूर्वोत्तरपदलोपो वक्तव्य इति परमपदस्य लोपे का
रीषगन्ध्यस्य पुत्र इति विग्रहे कारीषगन्धीपुत्र इतीष्यते स न स्यात् अतः परिभाषयैव वारणम् यद्यपि संज्ञा सत्तायां
विषये पूर्वोत्तरपदलोपे सत्याभामा भीमो भीमसेन इत्यादिनदुदाहरणात्तथापि स्तोःश्चुनेत्यत्र योगः संयोगः
संपदस्य सत्याभामेत्यादाविव विनापीत्यतो लोपादिति शेखरविरोधादसंज्ञायामपि लोप इति वदंति एतच्च परिभा
षा वर्णनं तस्याः प्रयोजनान्तरं नास्तीत्यभिमानेनैव वस्तुनस्त्वतिखद्वायेत्यत्र याड्डारणां प्रत्युदाहरणं परम।
खट्वायै इत्यादौ नड्डावनं परमकारीषगन्ध्याशब्दः प्रत्ययग्रहणपरिभाषया ष्यङन्तो न भवति इति परिभाषाश्र
यणमनुपसर्जनत्वात्तदादिनियमेनात्र ष्यङन्तमपि तथेति ध्वनितं भाष्ये पूर्वपदलोपोप्यत्र चिन्त्यम् बहुधनो ऽ।
त्यधन इत्यादावपि तदापत्तेः यत्तु योगपदे संपदलोपोदाहरणं तत्र युजेरेव संयोगार्थकत्वेनादोषात् अत एवाव्यव।

हिते श्चुत्वसिद्धये स्तोश्चोश्चुरित्युक्तम् भाष्यसूत्रकारमतेऽपि स्पष्टप्रतिपत्तये संयोगपदाध्याहार एवो चित इति दि
क् १० इजादेश्च गुरुमतोऽनृच्छः इजादेः किम् ववौ गुरुमतः किम् उवोष अनृच्छः किम् आनच्छ नचक्रच्छ।
ऽटनामिति लिटि गुणविधानसामर्थ्यादाम्न भविष्यति किमनेन पर्युदासेनेति वाच्यम् गुणविधानसामर्थ्येनाम्भाव
वहिनेऽपि तस्य वृत्तेरिति शेखरे समाहितम् तत्राशंका सूत्रेऽनृच्छ इति पदाभावे आनच्छेत्यत्राम् प्राप्तः गुणे
ऽपि प्राप्तस्तत्र प्रतिपदोक्तत्वादपवादत्वाच्च गुणे कृते इजादित्वाभावादामः प्राप्तिरेव नेति व्यर्थमनृच्छ पदमत्र समाधानम्।
विभावयन्तु सुधिय इति पण्डिताः शेखरपंक्तिस्तु इत्यमून चक्र च्छे लिटि गुणविधानसामार्थ्यादेव तत्सार्थक्यादिति सूत्र
तात्पर्यादिति अनया पङ्क्त्या भाष्यसिद्धान्तोप्यागत इति सूचितं तथाहि इयेषत्यादावाम् व्यावृत्तये उपदेशे गुरुमतोऽनृ
च्छ इति उक्त्या एवं तर्हि उंच्छेराम्वक्तव्यः अनृच्छ इति ज्ञापकादनौपदेशिकस्यापि गुरुमत्वस्याश्रय णात् उच्छांचकारे
त्यादावसिद्धौ इयेषत्यादावतिप्रसंगमाशंक्य उभयं न वक्तव्यमुपदेशग्रहणं न करिष्यते कस्मान्न भवति इयेषत्यादौ उक्त
म् वा किमुक्तं सन्निपातविरोधादित्यनृच्छग्रहणं व्यर्थमेवेति भाष्यस्थितेः पूर्वशेखरेऽनृच्छ इति पर्युदासमाश्रित्य ॥
चोग्गरेर नृच्छ इत्येव सिद्धेरादिग्रहणमतुव ग्रहणं च स्पष्टार्थमित्युक्तम् इजादिगुरुमतेनैवानृच्छ इति पर्युदासः॥

सार्थकोनान्यथेतिनञ्झावस्तदपिचिंत्यमेवसंयोगेगुरुमत्ववत्तामेवग्रहणापत्त्याईङ् गतौ इत्यादीनामसंग्रहापत्तेः इंचोगु
रोरितिसामर्थ्यान्न्यायंदोषोन्यथान्तृच्छइत्येवब्रूयादितिचेत्तावतापीचायदिगुरुमत्वस्याश्रयणाइङादेरसंग्रहः उच्छा
देरेवसंग्रहइतिदोषसद्भावात् वस्तुतस्तुगुर्विजादे रित्युक्तेपतरत्कर्त्तुमशक्यमथवागुर्वादेरित्येवास्तुदयायासश्चेत्यत्रा
संग्रहणादकारगुर्वादेश्चनह्यासेरेवेतिनियमात्सिद्धेः नवासेरोपदेशिकाकारगुर्वादित्वे नैतद्विषयकनियमेशात्वादिप्रस
तिश्चास्यादितिवाच्यम्लाघवेनसामान्यनियमाश्रयणादितिदिक् ११ अतोदीर्घोयञिसार्वधातुकेकिम्केशवः
अङ्गनाकेशाह्वोन्यतरस्यामितिवः अत्रकेचित्सार्वधातुकग्रहणंमास्तुसुपिचेतिसूत्रनियमादेवादोषात्सार्वधातुक
भिन्नेयजादौदीर्घश्चेत्तर्हिसुप्येवेतिकेशवशब्दादावप्रवृत्तेः समाधानन्तुराजभ्यामित्यादावपिदीर्घापत्तिरिति अतो
दीर्घस्यसुब्विधित्वाभावेननलोपः सुप्स्वरेतिनलोपासिध्यभावात्तुतुतद्व्याप्यधर्म्माश्रयविधौचसुब्विधित्वादिति।
समाधानान्तरंतुतत्वप्रकाशिकायांद्रष्टव्यं १२ ज्योतिरायुषः स्तोमः समासेऽङ्गुलेः संग इत्यतस्समास इत्यनुवर्त्तते आ
भ्यामुत्तरस्योत्तरपदावयवस्यघइत्यर्थः अत्रमूलेसमासेकिम्ज्योतिषः स्तोमइत्युक्तम्तत्रइणकोरित्यधिकारान्
किन्तुज्योतिस्तोमोस्तिब्राह्मणानामितिप्रत्युदाहर्त्तुमुचितमितिपण्डिताः केचित्तुसमासग्रहणस्यनिष्टत्वावष्यसपदविधित्वा

त्समर्थपरिभाषयासमासएवास्यप्रवृत्तिरितिसमासग्रहणंचिन्त्यप्रयोजनमित्याहुस्तन्नपदाधिकारस्यापदान्तस्यमू।
र्धन्यइत्यतःप्रागेवनिवृत्तेःभाष्यउक्तत्वात् वस्तुतस्तुमूलाशयइत्थंयोज्यः १२ नुम्विसर्जनीयशर्व्यवायेपीतिषत्वस्यसा
त्पदाद्योरितिनिषेधस्यापवादोयंतेननुम्विसर्जनीयेतिसंवध्यतेइतिवाक्येऽपिप्रवृत्तिःनचप्रत्येकमितिव्याख्यानान्निस्स
इत्यत्रैवात्राप्यप्रवृत्तिरितिवाच्यम् एवंतर्हिसमस्तान्येवभीरुष्ठानाग्निष्टुदग्निष्टोमज्योतिष्टोमादीत्येतंसमासेकिम् इसा
नेनतदधिकारीयभीरोःस्थानमित्यादित्रिसूत्रीकिमर्थेतिप्रश्नाशयः असमासेप्रवृत्तिविरहात्सुरापार्थोसतितदुत्तरमित्य
न्ये १४ एमाद्रामादित्यत्रमूलेजश्त्वावसानइत्युक्तम् पूर्वंचर्त्वासिद्धाज्जश्त्वमितिमनोरमा अपवादत्वाज्जश्त्वंवा
धित्वाचर्त्वेततोजस्त्वमितिशेखरः जश्त्वाप्राप्तिविषयेचर्त्वस्याचारितार्थ्यादपवादत्वसंगतेरितिशेखराशयः अस्यापरिदू
षणान्तरंषषृशब्दादौपूर्वंषस्यषएवचर्त्वेततोजश्त्वेषएवश्रूयेत जक्षित्याद्यःषडितिनिर्देशेनषस्यटकारएवनतुषका
रइतिपरिहारेऽपिपूर्वापरविरोधःशेखरस्यास्त्येव उपानदित्यत्रघत्वजश्त्वचर्त्वानीतितदुक्तेः किंचचतुर्णामित्यत्र।
णत्वंद्वित्वमितिप्रतीकमुपादायनतुद्वित्वंणत्वमित्येवयुक्तम् पूर्वत्रासिद्धमद्वित्वेइतिवचनादिदंवर्णद्वित्वेऽपिप्रवर्त्त
तेवाक्कुवागितिभाष्योदाहरणात् अन्यथाद्वित्वदृष्ट्याचर्त्वस्यासिद्धत्वाज्झस्यैवद्वित्वेनस्यचर्त्वेपूर्वत्रगश्रवणापत्तेरित्युक्तम्।

अस्मादपि पूर्वं जश्त्वं पश्चाच्चर्त्वमित्यायातीति पण्डिताः पदान्तविषये पूर्वं जश्त्वमिति न्याय्यमेव वावसाने इत्यस्याप-
दान्तमलां चर्त्वविधानेन चारितार्थ्यात् अत्र पदाधिकाराभावात् अनुकरणं चानितिपरमिति ज्ञापकादनितिपरस्याप्य-
नुकरणस्य सत्त्वादवसाने स्यदाद्यनुकरणे स्यत् तत् इत्यादौ पक्षे चर्त्वस्यापीष्टत्वात् न त्विदमयुक्तं न ह्यनुकरणत्वभङ्ग-
भिया शास्त्रस्य बाधश्चमत्कारतामुपैति पठन् इति इत्यादिषु अव्यक्तानुकरणस्यात इतौ इति शास्त्राणामप्रवृत्त्याप-
त्तेः तेषां वैयर्थ्यापत्तेश्चेत्यलं विस्तरेण १४ प्राचांष्फस्तद्धितः गार्ग्यशब्दात्ष्फः आयनादेशो यस्येति चेति तद्धितनिमि-
त्त इकारलोपः तद्धितान्तत्वप्रयोजनं प्रातिपदिकसंज्ञा च ष्फान्तस्य तेन षिद्गौरेति सिद्धश्च ङीषिति तत्र सवर्णदीर्घेण
षित्वसामर्थ्यादप्रातिपदिकत्वेऽपि ङीषा च सिद्धिमाश्रित्य तद्धितग्रहणं प्रत्याख्यातम् गौकक्ष्यशब्दो गर्गादियञ-
न्तस्तस्मात् क्रौड्यादिभ्यश्चेति क्रौड्यादिगौकक्ष्यशब्दात् ष्यङ् ततो यङश्चेति चाप् गौकक्ष्या ततः ष्फप्रत्यये विवक्षिते
तद्धितसंज्ञायां भस्याढे तद्धिते इति पुम्वद्भावे चापो निवृत्तिः ष्फप्रत्यये षित्वान्ङीष् गौकक्ष्यायणीति सिध्यति पुम्वद्भा-
वश्च तद्धितत्व एव ष्फस्य संगच्छते पुम्वद्भावाभावे यञन्तत्वविरहात् ष्फो न स्यादिति कस्यचित्समाधानं न युज्यते तथा
हि गौकक्ष्यशब्दपाठस्य क्रौड्यादिषु भाष्ये प्रत्याख्यातत्वात् गौकक्ष्येति तु षाद्यञश्चेति चापि सिध्यति मास्तु क्रौड्यादि

उ.प. तात्यङ्न च गौकक्ष्यायणीति न सिद्ध्येच्चापः ष्फप्रत्ययस्यापवादत्वादिति वाच्यम् प्राचां ष्फ इत्यत्र सर्वत्रेति सूत्रात्सर्वत्रेत्यपकृष्य प्राचां सर्वत्र ।
१० ष्फविधानात गौकक्ष्येति हृदीचां मते सेत्स्यति एवञ्च गौकक्ष्यापुत्र इत्यादौ ष्यङन्तत्वाभावेन ष्यङः सम्प्रसारणमित्यस्याप्राप्त्या गौकक्ष्यायाः स ।
म्प्रसारणप्रतिषेधो वक्तव्य इति वार्तिकमनारम्भणीयमित्यपरमनुकूलम् किं च ष्फप्रत्यये विवक्षिते भस्याढे तद्धित इ
त्यस्य प्रवृत्तिरनुचितैवायनादेशोत्तरमेव भसंज्ञायाः प्रवृत्तेः किं च ष्यङन्ते यञन्तत्वविरहेणाष्फस्याप्रवृत्तेः किं च त
द्धितग्रहणमन्यतोऽपि विधानार्थं तेनासुरेरुपसंख्यानमनापूर्वमिति कैयटोप्येकदेशी तथा हि आसुरेरुपसंख्यानमि
त्यस्याग्रे भाष्ये छ इति वक्तव्यमासुरीयः इत्युक्तं तत्र सिद्धान्तः कैयटः आसुरिणा प्रोक्त इति विशेषेऽर्थेऽण् श्वेति अणि प्रा
प्ते छ एव क्रीयते लाघवादन्यथा ह्यासुरीय ग्रहणं कर्तव्यं स्यादिति एतेनोपसंख्यानस्यावश्यकत्वे प्राचामिति सूत्रस्था ।
भाष्ये तद्धितग्रहणप्रत्याख्यानमेवाद्रियत इति तत्त्वप्रकाशिकायां द्रष्टव्यम् ९५ टिड्ढेत्यत्र वार्त्तिकम् नञ्स्नञीक
क्ख्युंस्तरुणतलुनानामुपसंख्यानमिति तेन ङीपि अन्तानुदात्तावि मौ गौरादि ङीषि तु अन्तोदात्तावितिग्रन्थकाराः
तत्र पण्डिताः वार्त्तिके गौरादौ चानयोः पाठो मास्तु वह्वादिष्वेवानयोरस्तु पाठस्तत्र पाठान्ङीष्सिद्धः पक्षे वयस्य चरम इ राम.
तिङीविति स्वरद्वयसिद्धिरिति समाधानं विभावयन्तु सुधिय इति अत्रेदं तत्त्वं ६ ४ ७ ३ ६ ४ ७ ३ १०

तरुणा तलुनशब्दौत्रोरश्चलइति उनन्प्रत्ययान्तौ यौगिकौ तरन्तिप्रथमं वयस्तरतिदुःखमितिवायदाहदुःखतरणात्कं ।
औणादिः नदापिङीष्सिद्धये गौरादिपाठश्चावश्यको नेहवयस्यचरमइतिप्राप्नोति एतच्चवयस्यचरमइतिब्रुवतातरु
णातलुनयोरूपसंख्यानंकुर्वत्तावार्त्तिककारेणासूचितम् सूत्रकारमतेनप्रथमवयोवाचिनएवग्रहणात्तरुणातलुनयो
रग्रहणमेवसर्वथेति गौरादिपाठस्तयोरितिवोध्यम् मध्यान्हेतरुणोरविरित्यादौ प्रचण्डोरविरित्याद्यर्थमावश्यकं
तरुणशब्दःप्रौढपर्यायोपिअथतदर्थकोयदातरुणशब्दः प्रयुज्यतेथवातरुणतात्पर्येणवृद्धेपिप्रयुज्यतेऽथवा ।
प्रौढ्यार्थकोवागृह्यतेतत्तात्पर्य्येणोपसंख्यानमिति ९६ घेर्ङिति अन्याङ्गस्यसुपीतिचानुवर्त्तते अत्रपण्डिताः घे
ङीत्येवास्तु यस्मिन्विधिरिति परिभाषयातदादिविधौङ्गादौसुपीत्यर्थेणसिद्धेरिन्ग्रहणंव्यर्थंप्रायोगिकङ्गादेरसम्भ
वादावौपदेशिकङादित्वंगृह्यते मवाहुशब्दात्तृतीयैकवचनस्थानेआङ्याजेरित्याङादेशस्तुङादेशएवास्तुप्रवाह
वेत्यादिसिद्धयेमत्यामित्यादौतुङेरामादेशेनंस्यङादित्वाभावादाराणद्याइतिनप्रवर्त्ततेतङितिकरणंतुअनुवन्धका
र्यत्वादनल्विधावपिस्थानिवत्वाज्ज्ञायतेयद्यपितथाऽपिङेरामित्यत्रङेङोमित्युक्तेनकश्चिद्दोषइतिप्रश्नः अत्रोत्तरंङा
मादेशेकृतेलशक्विसंज्ञा एन द्याइत्याट्च प्राप्नोतत्राडागमस्याङ्गत्वाद्द्वारेणपरिभाषयान्तरङ्गायाअपीत्संज्ञायावा

घेङ्कारश्रवणापत्तिरडागमस्य नित्यत्वमपि इति केचित्तन्माद धत्ते वस्तुतस्तु इत्त ग्रहणं स्पष्टार्थं आ एन घा इत्यादौ सेनान्या
मित्यादौ ङामादेशश्च वरितार्थ इति नद्यावन्ते परत्वान्ङामादेशे सकृद्गति न्यायाद्दाडागमाप्रवृत्ते र्यणा रूपसिद्धेः न चाडाग।
माभावे नुट् स्यादिति वाच्यम् । निरनुबन्धपरिभाषया आम ग्रहणेन ङामो ऽग्रहणात् एवं सानुबन्धो ङामादेशश्च वरिता।
र्थः न चैवं रीत्या नुटो ऽभावे ऽपि आट् इव याट् स्याटोरप्य प्रवृत्तिः स्यादिति वाच्यम् लक्ष्यव्यवस्थापकत्वे तत्तो न्यायो
पुनः प्रसङ्गेति सकृद्गते तिव ह्रस्य्यानुरोधाद्याट् स्याटो र्विषये पुनः प्रसङ्गाद्याट् स्याटावित्य दोषात् कथमन्यथा ऽटि कृ
ते ऽपि यदागमन्यायात्परादिवङ्गावाहृ ऽऽमत्वेन प्राप्तस्य नुटो वारणं भाष्योक्तं संगच्छेत आगमादेशे परत्वात्कृते पुनः प्र
संगादादूत्तस्मिन्कृते सकृद्गति न्यायान्नुटो ऽभाव इति भाष्यमते यथा सिद्धिरिष्टस्य तथा ऽत्र पक्षे ङामि कृते सकृद्गसा ऽऽटो भाव
पुनः प्रसंगाश्रयेण याट् स्याटोः प्रवृत्तिरेव न भेदो रूपसिद्धिस्त्समैव अथवा भवत्वा इङः स्येत्संज्ञा तुल्यशक्तित्व त्रोप
देशे ऽजित्यत उपदेशपदानुवृत्त्या सेत्स्यति प्रत्ययस्योपदेशे आदिभूतं यल्लशकुतेस्सेत्संज्ञेति व्याख्यानात् एत
च चुटू इति सूत्रे भाष्ये ध्वनितं तथाहि चञ्चुप चणपोश्च कारप्रतिषेध इति वार्त्तिक प्रत्याख्यानाय भाष्ये उक्तं यकारा । राम·
दौ चञ्चुप् चणयोः किं यकारेण श्रूयते लुप्तनिर्दिष्टो यकार इति अत्र यकारो लुप्तो ऽपि प्रत्ययादिश्च इत्संज्ञा प्रा ॥ ११

स्योपदेशेऽप्यादिरकारो नास्तीति तात्पर्य्यफलम् कल्प्यम् सामर्थ्यकल्पनाया अनौचित्यादेव अन्त्यशक्तिस्ये तत् सूत्रेऽपि साह। चर्य्येणोपदेशपदानुवृत्त्याऽदोष इति तत्त्वप्रकाशिकायां द्रष्टव्यम् ९७ अनेकाल्शित्सर्वस्य अत्र शेखरः नानेकालशिदिति तु नोक्तम् तन्न युक्तम् अनन्तरत्वादादेः परस्येत्यस्यैव निषेधे हि डिदनेकाल् अलोऽन्त्यस्येत्यस्य वा तस्य सिद्धेः ङिच्चेति व्यर्थं मे। वेत्यत्रानन्तरन्यायो न प्रवर्त्तते अत्र समाधानं कुर्वन्तु सुधिय इति अत्र पण्डिताः यद्यप्येतत्कौस्तुभेप्युक्तम् अन्त्यस्यादेशिति चानुवर्त्यानेकालशिदाद्यन्तयोर्नेति ङिदनेकालोऽन्त्यार्थं ङिच्चेत्यारब्धव्यमिति तथापि युक्तं शेखराशयः ङिच्चेत्यारम्भात्य दवाधेर्लक्षणात्पदलाघवाद्यथान्यासमुचितमिति ९८ अदर्शनं लोपः अत्र षष्ठी स्थान इत्यनुवर्त्तते तेन षष्ठ्यन्तस्य स्थाने पददर्शनं तल्लोपसंज्ञ इत्यर्थः तेन त्रपुइत्यत्र क्विपोऽप्रसंगात्तददर्शनस्य लोपसंज्ञाऽभावाद्ध्रस्वस्य पिति तुक् न भवतीत्याह प्रसक्तस्येति तदुक्तं शेखरे तस्मात् त्रपुइत्यत्र क्विपोऽदर्शनस्य सत्त्वेन न प्रत्ययलक्षणेन तुगापत्तिर्दोष इति नचायं शेखरग्रन्थः स्थानिवत्सूत्रस्य भाष्यविरुद्धस्तथाहि भाष्ये शब्दस्य नित्यत्वाद्बुद्धेरेव स्थानित्वादेशता चेति पक्षे सेनानीरित्यादौ कर्म्मण्यण् बुद्धिः किं बुद्धेरिति स्थानिवत्त्वेन वृद्धिः प्राप्नोतीत्याशंक्य षष्ठीनिर्दिष्टस्य स्थाने यत्रादेशस्तत्रैव स्थानिवदिति समाहितं प्रकृते क्विपः प्रातिपदिके प्रत्ययलक्षणेन तुगापत्तिः प्रत्ययलक्षण

सूत्रेणापि स्थानिवद्भाव एवानूद्यत इति चेन्न त्रपु इत्यत्र दोषाभावेनैवात्र भाष्ये ग्रामणी रित्यत्राणप्रसंगे प्राप्ते क्विप्प्रसंगे वु।
द्धेरेव स्थानिवद्भावाद्वृद्धिमाशंक्य योऽत्राणप्रसंगः क्विपाऽसौ बाध्यत इत्युक्तम् सत्सूद्विषेति क्विपो विधानादणोऽत्राप्रसङ्ग
इति कैयटः अस्माज्ज्ञाप्यात्षष्ठी निर्दिष्टस्य स्थानिवद्भावो बोधित एव त्रपु इत्यत्र तु अण इव क्विपः प्रसंगो नास्तीति तत्र प्र
त्ययलक्षणाप्रदर्शनमेकदेशिन इति तत्त्वम् अत्रामे तिष्ठतीत्यत्र लस्य वत्वार्थे निरूपितार्थाधिकरणत्वाभाववत्क्विकवत्त्वा।
र्थनिरूपितधात्वर्थक्रियायाः प्रकृत्यर्थत्वाभावाच्च प्रकृते षष्ठी स्थाने इत्यस्य भाष्येऽनुवर्त्तितत्वाच्च वस्तुतस्तु स्था
निवत्सूत्रोक्तषष्ठीनिर्दिष्टस्यादेशाः स्थानिवदिति भाष्येणैव गतार्थता प्रकृतसूत्रे षष्ठीस्थान इत्यस्यानुवृत्तिप्रद
र्शनं भाष्यस्य स्पष्टार्थमेवेति यत्तु अदर्शनमिदित्येवास्तु अदर्शनस्य त्वसंज्ञातस्य लोप इति न कर्त्तव्यमुपदेशेऽजित्या
दिसूत्रैरदर्शनस्यैव विधानादिति तन्न कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणेऽभ्जामितन्तिष्ठते रितप्रसयः स्यादि
त्यादिष्वित्पदेनादर्शनप्रतीत्यापत्त्यालक्ष्यासिद्धेः तपरसूत्रस्य कृदित्सादिविषयं स्यान्नक्कोरिडन्यन्यायेनेसद
र्शनबोधिकासंज्ञास्यान्न तु नत्कालबोधिकेति संज्ञयोर्विरोधाच्च समावेशासम्भवः इदित्सैकमात्राकालिकेकार
रूपस्य भावस्य दर्शनरूपत्वाभावान्न परसूत्रेणास्याः संज्ञायाः बाधेऽस्या निर्विषयतापत्त्योपदेशेऽजित्यादीनांस्व १२

स्यात् इदितो नुमित्यस्य त्वयमर्थः स्यात् इदिकारोऽदर्शनं यस्य सामर्थ्यात् यस्येकारो नास्ति अनप्रभृतेस्तस्यैव नुम् स्यात् चिति
प्रभृतेरिकारवतो न स्यात् अथाऽपि कथंचिदन्तेदित इति व्याख्यानात् स्याङ्कुजामिदित्यादिष्वत परनिर्देशेन निर्वाहे तु अ
दर्शनमिदिति सुवचमेव १९ द्विस्त्रिश्चतुरितिकृत्वोर्थे अत्र शेखरः इसुसोरिति उत्तरसूत्रे रीत्या सुच इति सूत्रयितुमुचि
तम् सुजन्तस्य पदस्येत्यर्थादिति अत्र दूषणं चतुष्करोतीत्यत्रेदुदुपधस्येति नित्यषत्वापत्तिः सुच इत्यस्यासिद्धत्वात्।
अप्रवृत्तेः सिद्धान्ते तु चतुर्ग्रहणसामर्थ्यान्नासिद्धत्वमित्यदोष इति अत्र समाधानम् इदुदुपधस्येत्यत्रापि सम्बन्धापत्तेः
सिद्धान्ते तु चतुर्ग्रहणसामर्थ्यान्नासिद्धत्वमित्यदोष इति अत्र समाधानम् इदुदुपधस्येत्यत्रापि सम्बन्धापत्तेः भाष्ये तु इदु
दुपधस्येत्यनुवर्त्य कृत्वोर्थे इस्येव सुवचमिति स्थितम् तदुपपत्तिस्तु सुच इत्येव सिद्धे गुरुभूतनिर्देशादत्रासिद्धत्वमिति
चतुष्करोतीत्यत्रेष्टो विकल्पः संपन्न इति तत्वप्रकाशिकायां द्रष्टव्यम् २० इकोगुणावृद्धी सूत्रप्रयोजनम् वार्त्तिकमिग्ग्र
हणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थमिति अत्र कैयटः अकारस्याकाररूपे विशेषो नास्तीत्युक्तमिति अत्र केचिद्विशेष
दर्शयंति अकारस्याकारे गुणे कृते पेचिथेत्यत्र नशसददवादिगुणानामिति निषेधादेत्वाभ्यासलोपो न स्यात् वस्तुतस्तु
विशेषो नास्त्येव थलि च सेटीत्यारम्भसामर्थ्यान्न विशेष इति पेचिथेत्यत्रेव ववरिथ ससरिथेत्यादावपि निषेधानापत्तिः

नशसदेदेति सूत्रे गुणाग्रहणस्य तु नवैयर्थ्यम् पपरतुः पपरुरित्यादावृच्छत्यॄतामिति गुणोक्तेरेत्वाभ्यासलोपनिवृत्त्या चारि॥
तार्थ्यात् अत्र केचिदित्थं समाधानं कुर्वन्ति केवलदीर्घस्थानिकगुणविषये नशसे यस्य सावकाशत्वे इति गुणाग्रहणमपहा
य तत्स्थाने इग्ग्रहणमेवकृग्रहणम्वा कुर्य्यात् सामान्येन गुणाग्रहणसामर्थ्याद्विजातीयस्थानिकविजातीयगुणस्यैव ग्रह
णादत्र विजातीयस्थानिकविजातीयगुणस्याभावादिति कैयटग्रन्थे न काप्यनुपपत्तिः अथवा थलि च सेटीति सूत्रस्य भाष्य
रीत्या नशसददेसूत्रे गुणाग्रहणांशगुणावयव परं गुणावयवो यो ऽकारस्तस्य निषेधस्तच्चनुनविधेस्तत्रैव सम्भवतीत्यदोष इति प
ण्डिताः वस्तुतस्तु अकारान्तधातोरेवाकारस्याकारेगुणो क्तोनविशेषतेति कैयटाशयः अकारोपधहलन्तेतु अलोऽन्त्य
स्येति हल एव गुणः नाचः इकूपरिभाषायाऽभावात् अथ पुकिअन्तः लघ्वी उपधा पुगन्तश्चलघूपधा चानयोः समाहारः
पुगन्तलघूपधमिति समासमाश्रित्य व्याधिकरणान्वयादंगावयवलघूपधायागुणा इति व्याख्यानमालम्ब्य येपचिथेत्यादौ
विशेषोक्तिसम्भवस्सोपिनयुक्तः वार्तिकप्रयोजनम् प्रत्याख्यानरूपवास्यप्रकारस्य भाष्ये उक्तत्वात् किंच अयं प्रकारोनवा॥
र्निकसम्मतोऽन्यथाकारसंध्यक्षरेत्यादेव ब्रूयादात्सन्ध्यक्षरेति न ब्रूयात् पुगंतस्याङ्गस्य गुणोलघूपधस्याङ्गस्य गुण इति सा॥
मानाधिकरण्येनान्वयः अलोऽन्त्यपरिभाषोपस्थितिपक्ष एव वार्तिके आदित्युक्तिस्सङ्गच्छते पुगन्तलघूपधस्येति सूत्रेतु उपधावे

लघुशब्देन्दुशेखर॥ १३

स्येति नियमार्थस्याज्ञेनैहिनोहिनेत्यादौ गुणः गोपयतीत्यादौ नियमबाधेन गुण एवेति तदपि न व्यपदेशिवद्भावेन तत्त्वात् २१
क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्त्तव्यं किम्प्रयोजनं उपधारोरवीत्सर्थं न वक्तव्यं ज्ञापकात्प्रतिषेधो भविष्यति यदयमिको
झल् हलन्ताच्चेति सनः कित्त्वं शास्ति तज्ज्ञापयत्याचार्यो भवत्युपधानुपधावा तस्यापि निषेध इति ग्रन्थः अत्र केचित्
हलन्ताच्चेति सूत्रस्य नैवेयर्थ्यं हलस्सनि सन्यङोरिति द्वित्वेऽत्र लोपोऽभ्यासस्येत्यभ्यासलोपे दम्भ इच्चेति हलन्ताच्चेति स
नः कित्त्वे धिप्सतीत्यत्रानिदितामिति नलोपार्थत्वात् कित्त्वस्य दम्भ इच्चेत्येव सिद्धेर्हलन्ताच्चेति सामान्यस्यारम्भात् समा
धानन्तु सृजिदृशोर्झल्यमकितीति सनी कोऽझल् दंभेरिति लघुनोपायेन सिद्धे हलन्ताच्चेति ज्ञापकमेवेति पण्डिताः वस्तुतस्तु
दम्भेरित्सु कृत्सु निमीमाघुरभलभशकपतपदामच इस् सितिमीमादीनामित्यादेशे मित्सति दित्सतीत्यादौ गुणाभावार्थं ह
लन्ताच्चेति सनः कित्त्वार्थमावश्यकं तथा सनीवन्तर्द्धेतीडभावे दिधूर्षतीत्यादि सूत्रारम्भ एव सिध्यतीति ज्ञापकपर
भाष्यस्याप्ययमाशयः प्रतिलक्ष्यं लक्षणभेदः यद्यपि नलोपागमाभावयोश्चरितार्थौ विधिस्तथा स्युपधागुणनिषे
धार्थो हलन्ताच्चेत्यचरितार्थ इति ज्ञापकत्वं तस्येति २२ नलोपः प्रातिपदिकान्तस्य अन्तग्रहणमत्र ज्ञापकम् पदस्ये
त्यधिकारः तत्र क्वचित्स्थानषष्ठी क्वचिदवयवषष्ठी तेन मादुपधायाश्च मतोर्वो इत्यत्रावयवषष्ठीत्वे पदावयवमतोर्म

उ.प.
१४

स्यवइत्यर्थेदृक्षवन्ताविस्यादौवत्वसिद्धिरन्यथादृक्षवान्निस्यत्रैवस्यान्नतुदृक्षवन्ताविस्यत्रेतिशेखरेस्थितम्वस्तुतस्तुव्या
ख्यानादेतल्लभ्यमनन्तग्रहणंस्यषष्ठ्यर्थमिति पदस्येत्यत्रभाष्येध्वनितंतत्रहिनलोपप्रत्याख्यायतेस्थानेषष्ठीअनन्तग्रहणा
द्वानलोपइत्युक्तम् लाघवाद्व्याख्यानेनैवषष्ठ्यर्थनिर्णयेषष्ठीस्थानेइतियोगोऽनन्तग्रहणंचनकार्य्यमितिभाष्याशयः ॥
२३तस्माच्छसोनःपुंसि ननुशसोनुम्पुंसिइत्येवसूत्रमस्तुअकःसवर्णेइत्यतोऽकइत्यनुवर्त्याकःपरस्यशसोनुम्स्यादित्यर्थः ॥ परत्वान्नु
मिपश्चात्प्रथमयोरितिपूर्वसवर्णदीर्घसंयोगान्तलोपसिद्धंरामानित्यादिलिहइत्यादावकःपरोनशस एतानगाःपश्ये
त्यत्रापिऔतोऽम्शसोरित्येकादेशआकारेकृतेशसःपरत्वाभावइतिदोषाभावइतिचेन्न विश्वपइत्यादावातोधातो
रित्यालोपेपूर्वस्मादपिविधावचःपरस्मिन्नितिस्थानिवद्भावेऽकःपरःशसइतिनुमापत्तेःपञ्चमीसमासप्रत्याख्या
नपक्षेतुनदोषःअष्टाविस्यत्रौशादेशेआत्वेकृतेनुम्स्यादितिवाच्यम् नकारस्यात्वंपरनिमित्तंवहिरङ्गमनरङ्गेनुमिकर्त्त
व्येनस्यासिद्धत्वादकःपरत्वाभावात् अथवाऔशादेशःक्रियत्तेप्रियतिस्त्रइत्यादौलचिरेणावाधःअत्रसमाधानंकुर्व
न्तुसुधियइतिपण्डिताःअत्रेदंसमाधानंरामानित्यत्रपूर्वसवर्णदीर्घेनित्यत्वात्कृतेपश्चात्सकारस्यनुमापत्तिःमित्वसा
मर्थ्यात्पूर्वंनुम्चेत्कार्य्यकालपक्षेऽन्तरङ्गेऽद्भकृत्वाडितिणलेकर्त्तव्येसंयोगान्तलोपस्यासिद्धत्वापत्तिःअत्रपक्षेऽसिद्धत्वा श्री १४

तस्मादित्येव लिङ्गम् अयमित्वसामर्थ्ये नुट् कर्त्तव्ये नुम्करणसामर्थ्यादित्यर्थो नकारादेशे कर्त्तव्ये तत्सामर्थ्यादिति वा ॥
च्चमस्त चायुक्तः पुंसि गाइत्यत्र नुमो नकारादेशस्य चारितार्थ्यात् शसः शकारस्य रणः परस्तत्रस्य भाष्यरीत्या शसः षरपरत्वा छ
सइत्यस्यावयवषष्ठीप्राप्तिर्वोध्या ॥ किञ्चमित्वसामर्थ्यादकः शसोऽचि परे नुम्स्यादित्यर्थे ऽकः एवं नुमाप्तौ रूपासिद्धिः तस्मा ।
दिति कृते नुन्दोषः शसोऽचोऽसम्भवादचीति न सम्बध्यते तस्मादित्युत्तरस्य तस्य प्रकृत्याऽचो नुमित्यर्थे दोष इति चेन्न हि य
मानित्वादौ गात्वदोषस्य वारणे निर्देशाश्रयणे प्रतिपत्तिक्लेश इति सूत्रकाराशयः शसो नः पुंसीत्यपि न युक्तम् अकः शसव
यवेऽचि पूर्वपरयोरेचि नत्वादेशापत्तेः एकः पूर्वपरयोरित्यधिकारे पञ्चमीसप्तमी चनैकस्यानित्यत्वबोधिकेति सिद्धा
न्तात् अचीति निवृत्तौ तु तत्र प्रमाणन्नास्ति भाष्ये तस्मात्किं एतान्गाइति न्यासान्तरे दोषान्तरोपलक्षणमिति मम दोषान्य
नु ओशादेश इत्युक्तम् तन्न ओ इत्युक्ते सर्वादेशसिद्धौ शित्वं व्यर्थं अथ ओशादेशस्तर्हि संहितायामष्टाभ्य औरित्युक्ते
गौरवम संहितायामप्यष्टाभ्य ओ इति गौरवं एव ओ शित्कर्त्तव्ये ज शशसोरनुमीय मानं यद्यपि वहिरङ्गं तथापि नुमाग ।
म एव वहिरंगः अर्थस्य पुंस्त्वस्याधिक्येनापेक्ष्यत्वात् अर्थकृतवहिरङ्गत्वं नास्तीति न त्व प्रकाशिकायां दूषितमेव किञ्च
नुमि कृते ज्ञानगौरवमुकारमकारयोरित्संज्ञा कर्त्तव्या मिदचइत्यस्यापि स्थित्याऽचः परत्वबोधनीयं संयोगान्तलोपे पदसं

उ.प.
१५

संयोगसंज्ञामपेक्षत इति पाणिनेरनियोक्ता नह्यन्तत इति युज्यताम् यदि तस्मादित्यस्य प्रत्याख्याने तन्त्राग्रहस्तर्हि शासे
नः पुंसि इत्यत्राकोऽदीर्घ इति पूर्वसवर्णा इति चानुवर्त्य पञ्चम्या विपरिणम्याकः पूर्वसवर्णो दीर्घोऽत्यरस्येति व्याख्यायतां किमनेनत
स्मादित्यनेनेति तत्त्वप्रकाशिकायां स्पष्टम् २१ हलङ्याब्भ्यो दीर्घात्सुतिसीति॰ अत्र मनोरमायां हल्ङ्याप्स्तोरित्येव सूत्रयितु।
मुचितम् तत्र शब्दरत्ने सुइदंतिस्योरुपलक्षणमन्यथाविभाराज्यमिति न सिध्येत् अविभरसुइति स्थिते हल्ङ्यासिध्या संयोगान्तलो
पेरेरीति लोपे संयोगान्तलोपस्य पूर्वत्रासिद्धत्वात् दलोप इति दीर्घो न स्यादिति अयं ग्रन्थः शेखरविरुद्धः तत्र हि अजघोइति
भाष्यप्रयोगात्पूर्वत्रासिद्धमित्यत्र पूर्वपदेन लोपसूत्रस्याग्रहणबोधनादित्युक्तम् अत्रेत्थं विरोधपरिहारः भाष्यप्रयो
गेण साधुत्वस्यासति पक्षे स्वीकारादिति प्रकृते तु तिस्याग्रहणयत्ने स्थिते तत एव साधुत्वं न भाष्यप्रयोगेण साधुत्वस्या।
स्यसति पक्षे स्वीकारात् नास्यूया कर्त्तव्यायत्नानुगम इति पंक्तिविंशतीति सूत्रस्य भाष्यादिति परिगणिताः वस्तुतस्तु शेखरो
क्तः सम्यगेव पितृराज्यमित्यत्र सूत्रकारसिद्धान्तेऽपि संयोगान्तलोपस्यासिद्धत्वाद्दीर्घो न प्राप्नोतीति रो रीति लोपस्या
श्रयासिद्धत्वेऽपि संयोगान्तलोपस्यासिद्धत्वेनोक्तभाष्यप्रयोगेणैव यद्दानमुन इत्यत्र न न इत्येवक्त तेष्वमुग्रहणं योग
विभागार्थं नेति मुनेत्ति क्वचिदसिद्धत्वन्नेति व्याख्याय प्रयोगाणां निश्चित्य नातिप्रसंगः आश्रययोगविभागार्थं नेति मुनेति १५

अतएवप्रत्ययःपरइतिरेफस्यलोपःविसर्गःअजर्घाइतिभाष्यस्याश्रयात्सिद्धत्वेप्युपपत्तिरस्तिअथवाकल्पमप्यत्रैवनात्यर्थ्येनतस्य
दोषःसंयोगादिइत्यादिवार्त्तिकानियोगविभागसिद्धानीतितत्त्वम् २४ वदव्रजहलन्तस्याचः हल न्ताचइत्येवसिद्धेवदव्रज्योर्ग्र
हणंअतोहलादेरितिवैकल्पिकदीर्घबाधनार्थंननुवदव्रज्योश्चइत्येवास्तुअजग्रहणसामर्थ्याद्धलन्तस्याचइत्यर्थोभविष्य
तिवदिव्रज्योरवयवस्याचइतिनार्थःअतोल्रान्तस्येत्यतोऽतइत्यनुवृत्त्यैवसिद्धेस्तस्यवैयर्थ्यात् अजन्तार्थत्वन्तुनास्तिसिचि
वृद्धिःपरस्मैपदेष्वित्येवसिद्धेः अनिगन्तार्थमिदमित्यपिन अचिकीर्षदित्यत्रणयल्लोपावितिवचनादतोलोपविधानात्।
अपासीदित्यत्रवृद्धौनास्तिविशेषः रजन्तानामित्यनेनसिद्ध्यसम्भवात् तदेतदाहुर्भाष्यकाराःएवन्तर्हिइदमेवहलग्रहण
मनुस्तंहलग्रहणमनेत्यार्थम् अजग्रहणमनिगर्थमिति अभांसीदरांसीदित्यादिसिध्याऽचआन्तर्यायाययरोऽपिवि
ध्यर्थमित्यर्थःअन्यथाचकासीदित्यादावप्यतिप्रसङ्गःस्यात् तदुक्तंभाष्येसिद्धंतेव्यवायेतुनभवतियदिसिचानन्त
र्य्यंविशेष्यतइति अथानिगर्थमितिभाष्यस्यायमर्थःअगग्रहणाभावइक्परिभाषोपस्थाने अभैत्सीदित्यादावेवस्या
त्तुअभांक्षीदित्यादाविति अन्तग्रहणंतुस्पष्टार्थमन्यथाहलोऽचइत्युच्यमानेअजन्ताङ्गस्यहलःस्थानेवृद्धिःस्यादित्यय
मप्यर्थआशंक्यतेतिकैयटेस्पष्टार्थम् अत्रैषविचारोऽनुचितश्शेखरेस्पष्टत्वात् २५ नपदान्ताद्वोरनाम् विशेष्यविशेषणभाव

उ॰प॰ देवान्तपदेलाभेस्पष्टार्थंनदितिशेखरःपदान्ताद्वेतिसूत्रेशेखरेअन्तग्रहणंपदान्तकार्यार्थंअन्यथापदविधित्वात्सासमर्थप
१६ रिभाषोपस्थितेरसमर्थेनिष्ठतिकुमारीछत्रंहरदेवदत्तइत्यादौनस्यादित्युक्तम्तस्यायंभावःनपदान्तादित्यत्रतुनसमर्थपरि
भाषोपस्थितेःषष्ठामित्यत्रतदुपस्थित्यैवनपदान्तादित्यस्यानुपस्थित्यानामित्यस्यैवेयष्ठ्यापत्तेःसमर्थपरिभाषांप्रतित्रि
पादिस्थस्यैवनपदान्तादित्यस्यासिद्धत्वान्नतस्याअत्रोपस्थितिरितिनपूर्वापरविरोधःशेखरस्येतिपण्डिताःनपदान्ता
दित्यत्रयेनविधिरित्यस्यानित्यत्वबोधनार्थमन्तग्रहणंमृत्तेनसमासप्रत्ययविधौप्रतिषेधइत्यादिवार्त्तिकसूत्रकारेणापिबो
धनमितिनापूर्वम्किञ्चतिङ्ङतिङइत्यत्रातिङ्ग्रहणंपचतिभवतिइत्यादौमाभूदितिकृतम्तत्रतुसमर्थइत्येवसिद्धंतत्रैकार्थीभावएवसा
मर्थ्यमित्यतिङितिज्ञापकात्पदकार्य्येऽपिक्वचित्समर्थपरिभाषानुपस्थित्येवनुकिंसिद्धेपदान्ताद्वेत्यन्तग्रहणमपिस्प
ष्टार्थम्किञ्चविशेष्यविशेषणभावेकामचारस्यापिबोधनार्थमन्तग्रहणंतेनोतश्चप्रत्ययादसंयोगपूर्वात् उदोष्ठ्यपूर्व
स्येत्यत्रोकारयोःसंयोगपूर्वःऋकारोयओष्ठ्यपूर्वइत्यादिव्याख्यातंभाष्येसङ्गच्छते अन्यथोकारान्तस्यासंयोगपूर्वत्व =
ग्रहणेऋकारान्तस्योष्ठ्यपूर्वत्वग्रहणेवादाप्नुहिइत्यत्रहेर्लुक्स्यादुकारान्तप्रत्ययस्यासंयोगपूर्वत्वादुकारेयोःसंयोग श्री १६
पूर्वइतिव्याख्यानेनदोषःएवंसंकीर्णइत्यत्रधातुर्यऋदन्तस्तस्यओष्ठ्यपूर्वइत्यर्थेअत्रैवस्यान्नपिपूर्वइत्यत्रस्यादितियेनेत्यत्रभा

ष्टम् २ई ङसिङसोश्च अत्र ङिदसीत्येव सिद्धे ङसग्रहणं स्पष्टार्थमिति पण्डिताः ङिदस इत्युक्तेः प्रत्ययग्रहणानापत्त्या पदान्ता
दित्यस्य सम्बन्धे हरेरित्यादौ न स्यात् नियमात्पदान्तादेङोऽतिपूर्वरूपं च न्ङिदसोऽकारस्यैवेति पुंसोऽसुङित्यत्र सुङित्येकदे
शस्यासोऽनुकरणादिच्छाक्यचि अस्यतीति भवति तस्य देवदत्तोऽस्यतीत्यादावेव प्रवृत्तिः स्यात् प्रकृतिवदनुकरणमित्यतिदेशे
न ङिदसः सम्भवात् अजहत्स्वार्थपक्षे प्रक्रियादशायां कल्पितेनास्यासोऽर्थवत्वाच्च अत एव नमस्करोत्येत्यत्र नमः पदस्या
र्थवत्वं नोपपदविभक्तिरित्यनेन द्वितीयावारणं नत्वर्थवत्परिभाषया नमसोऽनर्थकत्वे गतिसंज्ञाविरहान्नमस्पुरसोरिति
सत्वस्यैवानापत्तिः अनिनस्मन्ग्रहणेऽनर्थकस्यापि ग्रहणाच्च प्रत्ययाप्रत्यययोरिति प्रत्ययङिदसोर्ग्रहणं तु नसा।
परिभाषैव नास्ति कथमन्यथाचार्य्यो ङसो ग्रहणं कुर्य्यात् ङसेश्चेत्यपि न पुक्तम् ङश्च सश्चेति द्वन्द्वे प्रत्येकादापत्तेः ङान्त
सान्तपदसम्बन्ध्यति परस्येति नार्थः नन्वेवन्तर्हि एङः पदान्तान्ङिदश इति ङसोश्चातीति वा वक्तव्ये पृथक्सूत्रारम्भसाम।
र्थ्यादेवास्य पदान्तविषयत्वादपदान्तः एङ् तु ङसोः परत एव सम्भवतीति न दोष इति चेत्सत्यम् ङसिङसोर्ग्रहणं तु साम।
र्थ्यकल्पना अयणीयस्याप्रत्ययत्वस्य निश्चयात् अत एव ऋत उदित्यस्य व्याख्याने ऋदन्तादङ्गादिति संगच्छते ङसिङ
सोः प्रत्ययाभ्यामङ्गाक्षेपादन्यथाकर्त्तुः अस्यतीत्यत्राकारएकादेशपरभाष्यं न सङ्गच्छते ङसिङसः प्रत्ययाभ्यामङ्गाक्षेपप्राप्तो

उ.प स्तम्भवात्पदान्तग्रहणस्योत्तरार्थत्वेऽपिङिदसग्रहणान्मध्येऽसम्बन्धोज्ञायतेसख्युर्यःपत्युर्नःजनिकर्त्तुरित्यादिनिर्देशैःप्र
१७ त्ययाप्रत्यययोरित्तिपरिभाषाश्रयणेनवाङिग्रहणेनुप्रतिपत्तिक्लेशएवेतिदिक् २७ समःसमि अत्रसूत्रेशेखरेसमोमिङिति
इगितिवानकृतंपरिभाषाज्ञानगौरवापत्तेरित्युक्तम् तत्रसाकच्कार्थत्वात्सम्यादेशस्यान्यथासमकच्त्र चइतिस्थितेमिङादेशे
ङिःश्चेत्यस्यप्राप्तेमिङादेशस्यङित्वादंत्यस्यस्यात् समाधानन्तुवहिरङ्गःकुत्सादिनिमित्तकत्वेनाकचोवहिरङ्गत्वादादेशोत्तरमेवा
कजितिप्रथेतत्सूत्रभाष्यप्रामाण्येनात्राकचोऽनभिधानमेवेतिपण्डिताःवस्तुतस्तुसमःसमीतिसूत्रेऽकचोऽनभिधानकल्पन
भाष्यप्रामाण्येननोपलभ्यामहेकिन्तुइदमोन्वादेशेऽशनुदात्तइतिसूत्रेभाष्येविचित्रास्तद्धितवृत्तयइत्यक्तचूनज्ञायतइत्युक्त
मत्तद्भाष्यप्रामाण्येनात्राकचोऽभावेमिङित्युक्तेरूपाविशेषोक्तिःशेखरस्ययुक्तैवकिंचसम्यगर्थसशब्देकुत्सासम्भवोऽपि
नास्तिसूत्रकारेणतुसमिग्रहणाविष्वग्देवयोरित्यत्रष्टेरित्यनुवृत्तिर्माभूदितिकृतम्पदान्तुटेरित्यनुवर्त्यसमइत्युच्यतेतदान
किञ्चिद्दुष्टमितितत्वप्रकाशिकायास्पष्टम् २८ सार्वधातुकार्द्धधातुकयोः ननुपिदार्द्धधातुकयोरित्येवकर्त्तव्यमार्द्धधातुक
साहचर्य्याद्धातोरित्युच्चार्य्यविहितस्यपि नोग्रहणात्स्तुलुइत्यादौनदोषःसार्वधातुकमपिदितिसूत्रंमास्तुसमाधानंसाहच
र्य्यमनित्यज्ञापनार्थत्वंसूत्रस्येतिकृत्वार्यग्रहणंसूचइतिन्यासेनशेखरेखण्डितमेवफलन्तुसिजभ्यस्तविदिभ्यश्चेत्यत्रसिच् १९

चर्य्यमनादृत्याभ्यस्तात्परस्य ङित्सम्बन्धिनो लङःस्थानिकस्यापि भेर्जुस् सिद्धोऽदद्धुः अबोभवुरिति पण्डिताः वस्तुतस्तु सार्वधा
तुकमपिदिति न सादीनां ङित्वार्थं तेन हतो हथ इत्यादावनुनासिकलोपः ग्रहिज्यादिषु सम्प्रसारणादि सेत्स्यति न च तिङः
पित्संज्ञाविज्ञानादपित्तिङ् दुर्लभ इति वाच्यम् तिङ्संज्ञाविधावौपदेशिकपित्वस्य सामर्थ्येनाश्रयणात्सार्वधातुकप्रदेशेतु
पिद्ग्रहणमेवास्तु किञ्च अपिद्ग्रहणमसंयोगाल्लिट् किदित्युत्तरार्थमपि वाच्यम् पिदार्द्धधातुकयोरिति तु पिति ङितीति नि
षेधादौपदेशिकपित्वेव प्रवर्त्ततेनदोषः कैश्चिदिति चेन्न प्रदेशेषु पित्पदेन कृत्रिमस्यैव ग्रहणेनाभ्यस्तस्याचि पिति इति नि
र्देशेपि इत्संज्ञकोयः पित्सौपदेशिक इत्यर्थस्यावश्यकत्वेपि शास्त्रे उभयगतिविज्ञानात्तस्यानुदात्ते ङिच्छुदुपदेशास्त्रसा
र्वधातुकमिति पिदित्युच्यमाने एवं स्नुचोः पिति रुदादिभ्यः पिति तु रुस्तु सम्यमः पिति यकृ पिति अकृत्पितोदीर्घ इ
त्यादौ संदेहापत्तेरेवस्यात्त कृत्रिमपितो ग्रहणेसत्यपि चेत् ङीत्वस्यैवाभावे सुप्तिङन्तस्येति पदत्वानापत्तिस्तथा च
रुदिहीत्यादौ तिङः तिङ इति निघातानापत्तिः उभयोः संज्ञासंज्ञयोर्ग्रहणे पूर्वे एवेत्युक्तम् अथ पित्संज्ञानङ्क्रियते सार्व
धातुकप्रदेशेषु संज्ञिनिर्देशोऽस्तु तिङ्शिदिति सार्वधातुकसंज्ञायान्तु तिङ्शाप्यादार्द्धधातुकयोरित्यादि आर्द्धधातुकति
ङ्शिदिति वक्तव्यम् लिट्चेति वचनलिङादेशस्तिङामार्द्धधातुकत्वं यत्रशितो संभवस्तत्र तिङ्ग्रहणमेव सार्वधातुक

उप· १८ दपिदितिवक्तव्यमतिङ् शितियगित्यत्र धातोरित्युच्चार्यविहिततिङ्शितिपग्विधानाल्लिहोदुहइत्यादौ कर्म्मशसि न दोषः शि।
दार्द्धधातुकयोरित्यत्रार्द्धधातुकसाहचर्याद्धोहीनित्यादौ न गुणः अपित्तः शितो ङित्त्वेच घेर्ङितीतिगुणो दुर्वीरइत्तिवाच्यम् एव
न्तर्हिधातोस्तिङः शिदपिदितिवक्तव्यमविहितविशेषणत्वाददोषइतिकेचिद्वदन्ति २९ इदुदुपधस्यचाप्रत्ययस्य अ
त्रमूलेएकादेशशास्त्रनिमित्तविसर्गस्थानेऽनेनसूत्रेणनषः कस्कादिषुभ्रातुष्पुत्रस्यपाठादिति अत्रपूर्वपक्षः षत्वन्तु।
कोरसिद्धइतिषत्वेकर्त्तव्यएकादेशस्यासिद्धत्वादिदुदुपधस्येत्यस्याप्रवृत्तेः कस्कादिषुपाठसामर्थ्यात्सत्वमितिमातुः
रूपेत्यादौशंकैवनास्तीतितन्नपदांतपदाद्योरेकादेशस्यैवासिद्धत्व मितिभाष्यसिद्धान्तात् तेनज्ञापकत्वंसम्यगेवतेनपरि।
वीषुपरिजीषुइत्यादौषत्वमिति ज्याव्येञ्भ्यां क्विपि ग्रहिज्येतिसम्प्रसारणेपूर्वरूपेहलइतिदीर्घे आदेशप्रत्यययोरि
तिसुपःसस्यषत्वेकर्त्तव्येपदान्तपदाद्योरेकादेशाभावात्पूर्वरूपस्यनासिद्धत्वमन्यथाऽकारेणव्यवधानादिणः पर
त्वाभावात्सस्यषत्वंनस्यात् यथावृक्षे च्छत्रमित्यत्रापिसिद्धएकादेशइति च्छे चेतितुक्नवस्तुतस्तुइग्यणःसम्प्र
सारणमित्यत्रसाचःसम्प्रसारणमित्येवसूत्रमस्तुसम्प्रसारणाच्चेतिमास्तुवृक्षे च्छत्रम् अजयेच्छत्रमित्यत्रतुइन्निवृत्त्या। राम
र्थः षत्वन्तुकृपदान्तपदाद्योरेकादेशासिद्धइतिनियमोस्वीकार्यः एवञ्चभ्रातुःपुत्रशब्दःकस्कादिषुविघ्य ४ ६ ॥ १८

र्थेएवंनज्ञापकइतिसमाधानंविभावयन्तुसुधियइतिपण्डिताःवस्तुतस्तुवृक्षेच्छत्रमित्यादावसिद्धत्वेपदान्ताद्वेतिनियमंवि
नानसिध्येदतोनियमोऽय मावश्यकएतन्नियमाश्रयणात्सम्प्रसारणाङ्गेषुसुसिद्धएकादेशइतिवक्तव्यमितिवार्त्तिकं
कर्त्तव्यंभवति शाकहूषुपरिवीषुवृक्षेच्छत्रंअजयेच्छत्रं इतिवार्त्तिकोदाहरणानिनियमएवसिध्यतिअत्रनियमेशंकि
तंभाष्येयदिपदान्तपदाद्योरेकादेशोऽसिद्धस्तर्हिओषधौ षूधौत्यत्रासिद्धत्वाभावेषत्वंप्राप्नोतिशसिपूर्वसवर्णदीर्घस।
स्यरुत्वंविसर्गेकःकुतइतिकृधिकृत्तेष्वनिदित्तेरितिसत्त्वेतत्रसमाहितंभाष्यकारेणैव कस्कादिषुभ्रातुःपुत्रस्यपाठा
देकादेशात्परस्यनषत्वमितिज्ञापकस्यसजातीयापेक्षयाकुप्वोःपरत्वएवनषत्वंतेनशाकहूमेपरिवीष्वित्यादावदोषः
षात्वंतुकोरसिद्धइत्यत्रपूर्वपदान्तपरपदाद्योरेकादेशोऽसिद्धइतिव्याख्यातंतत्रैवभाष्येतेनपदान्तपदाद्योरितिनिय
मेसिद्धेसिद्धंवृक्षेच्छत्रमित्यादिषुपदशब्देनपदयोग्यो पिगृह्यतेअधीत्यप्रेत्येतिभाष्योदाहरणात्परिविपूर्वस्यणाः
क्विवन्तस्यतुगभावःपरिवीयेनित्त्ववन्तेचनतुकृत्स्वनभिधानात् तदुक्तंप्रत्ययलक्षणमित्यत्रभाष्येवक्ष्यति अत्रपरिहारं
इहापिपरिविरितिशास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वंभविष्यतीतिआशयमाहकैयटःसतिप्रत्ययेपत्वकार्य्यंभवति
नत्लुप्तेपिभवतीतिसूत्रार्थःपरिवीयेत्यादौचसतिप्रत्ययेदीर्घोदृष्टोनतुगितिपरिवीरित्यत्रापिदीर्घएवभवतीत्येतेना।

उ.प. धीत्यप्रेत्यस्यत्र तु दीर्घौ दृष्टौ तेनात्र तुक्यसिद्ध इति युक्तैव अत एव ओघधीत्यत्रासिद्धत्वान्नष इति भाष्ययोरविरोध इति केचित् उ॰
१९ आडजादीनामनचाजादीनामपि लङ्लुङ्लृङ्क्ष्वित्यडेवास्तु किमनेन सूत्रेण आटश्चेति अटश्चेत्येवास्तु अस्य पोहसन्नित्य
त्राड्गार्ग्यगालवयोरिति स्वपोऽडागमे वृद्धिस्तु न अटश्चेत्यत्रोपसर्गादृति धाताविति धाताविल्यपकृष्यते नधात्ववय
वेऽच्येव वृद्धिरिति न दोषः आएनद्याड्स्यन्तु आडिति वक्तुमशक्यः बहुश्रेयस्यै पत्य इत्यादौ वृद्धिबाधकमतो गुण इ
ति पररूपं माभूदिति आड् विधानन्तु बहुश्रेयस्यामित्यादौ नुड्बाधनेन चरितार्थमटश्चेति धात्ववयवेऽच्येव प्रवर्त्तते आटि
सति तु वृद्धिरेचीति वृद्धिरित्याटश्चेति सूत्रस्थशेखरग्रन्थः अट् धातोश्शेखरे तु अटश्चेत्येवास्तु आतो दैधत्ते त्यादौ तु न
दोषः अतो गुणे नाट इति न्यासेन सिद्धत्वात् एवञ्च बहुश्रेयस्यै इत्यादावटश्चेति वृद्धिं विधाय पररूपबाधकमुभयथा
बहुश्रेयस्यै इत्यादौ पररूपं स्यादेव आएनद्या इत्युक्ते स्याड्याटोर्दीर्घान्तत्वान्नास्ति पररूपशंका तथापि पररूपं परत्वा।
त्स्याद्बहुश्रेयस्यै इत्यादौ तदर्थमाएनद्या इति वक्तव्यमटश्चेति चकारेण पुनर्वृद्धिविधानं बाधकबाधनार्थं तेनार्थेनैवा
टः पररूपमात्रं न इति न्यासेऽपि तदेव ओमाङोरुसीति न वक्तव्यमिति भाष्योक्तेरुभयथा उस्यामाङ्स्याट इति नारम्भ।
णीयमिति पण्डिताः न माङ्योग इति सूत्रे आडजादीनामिति प्रत्याख्यानपरभाष्यं त्वजादीनामटासिद्धेर्व्यर्थमिति चेद = शम. १९
टः अभ्यवोहसतीत्यत्र धातौ वृद्धिमटः स्मरेत्कथमिति चेद्योगविभागः करिष्यते अटः अचि वृद्धिर्भवति ततः उपसर्गा

तिवृद्धिर्भवति ततो धात्वाविस्तुभयोः शेषः अतो भाष्याच्च कारप्रत्याख्यानं स्पष्टमायाति आ यो दित्यादौ पररूपमाशंक्योक्तं पररू
पं गुणो नाटइति अनेनैव सिद्धे उस्योमाङि इति न वक्तव्यं भवतीति सदो माङो ऽरुसितत्समिति वहुअयस्येइत्यादौ वृद्धिस्तु इ
ति से पररूपे निषिद्धे प्रतिवन्धकाभावाद्वृद्धिरेचीत्येवमत्र पक्षे आ रान द्याइ तिवक्तुं शक्यः अटश्चेति चकारस्त्रोमाङोश्चे
ति चकार उस्योमाङि इति पररूपनिषेधार्थं च वार्तिकेना अयणीयं भवति अटश्चेत्यत्र भाष्यरीत्या तु आटइति वक्तुंश्चकारे।
ण पररूपवारणो सिद्धे उस्योमाङि इति न कर्त्तव्यं धात्वपकर्षेणाटश्चेत्यस्यापकर्षणाप्राप्त्या आ रान द्याइति दीर्घोच्चारण
मावश्यकं वृद्धिरेचीति वाधित्वा पररूपापत्तेः न चाङ्विधानसामर्थ्यात्पररूपाभावः शंक्यः आ रान द्याइति वक्तव्यं नाङ्
इति गौरवान्न कर्त्तव्यमित्याहुः केचित्तु वासुप्यापिशलेरित्यत्रापिशलिग्रहणेनैव सिद्धे वाग्रहणमटइत्यत्रानुवृत्त्यर्थे
म्व्यवस्थितविभाषार्थं तेनास्वपोहसन् वहुअयस्येइत्यादि सिद्धं धात्त्वपकर्षो ऽटश्चेत्यर्थे चकारकरणं दीर्घोच्चारणमाट
इति न कर्त्तव्यमेव एवं च आटस्याटो दीर्घोच्चारणमाएनद्याइत्यत्र दीर्घोच्चारणमप्यनावश्यकमेव व्यवस्थितविभाषया सि
द्धेः यद्वाशरावयवांगुल्यादौ हस्तपादाङ्गुलिरित्यादि निरूढव्यवहाराद्याट्स्याटोष्टकारो ऽकारस्याप्यवयवइत्यटइति वृ
द्धिः सिद्धेवेत्याहुः न चाडजादीनामिति छन्दसि हलन्ते अपुनहुआवित्यादौ दीर्घार्थमिति वाच्यम् छन्दोर्थं वहुलं दीर्घो
दृश्यन्ते तद्यथा पुरुषो नाह इति भाष्ये समाधानात् न चेणस्यो ऽडि ओइणो यणीति यणि

उ.प.
२०

असोरल्लोपइत्यल्लोपेऽकृतेऽप्यापन्नासन्निति न सिध्येदिति वाच्यम् इणास्त्योरन्तरङ्गतः इडागमेऽट इति वृद्धौ नास्ति दोषः इ।
णोपरिणतस्यैरनेकाच इत्यत एरित्य कृष्टः असोरल्लोपइत्यत्रादि नित्तपरकरणात् पश्चाद्यणलोपयोरप्राप्तेन चागमेऽपि।
वार्णादंगमिति न्यायात्प्रागेव यणलोपौ प्राप्नुतः इत्याड्वचनमिति वाच्यम् इणास्त्योरन्तरंगत इति भाष्यात् चक्षोः श्याङिति सनु।
कनिर्देशाच्चेयमनित्याऽन्यथांगत्वाच्छस्य षादेशेनुकोऽप्राप्तासनिर्देशो व्यर्थः स्यादिति भाष्ये ध्वनितम् ३१ भूवादयो।
धातवः क्रियावाचिनः किम् यां पश्यति न चास्य पाशब्दस्य लाक्षणिकत्वान्न धातुसंज्ञेति वाच्यम् भ्वादिषु लाक्षणिका।
नामपि अङ्कत्यादीनां दर्शनेनैतद्विषये न तत्परिभाषायाः प्रवृत्तेः नकारजावनुस्वारपञ्चमौ झलि धातुषु शकारजस्सकारश्च
दृषाद्वर्गस्तवर्गजइत्युक्तेः के रिति मनोरमोपरि शब्दरत्नग्रन्थः अत्रायं पूर्वपक्षः धातुसंज्ञाप्राप्ति अनुस्वारसवर्णा
दीनामसिद्धत्वेन प्रतिपदोक्तस्यैवासम्भवेन लाक्षणिकपरिभाषयायाः पश्यतीत्यत्र दोष इति शब्दरत्नग्रन्थोऽसङ्गतः कि
ञ्च क्रियावाचिनं किमित्यस्य वा करोति वा भवतीत्येवमस्युदाहरणं सम्भवति वा शब्दस्य धातुत्वेऽधातुरिति निषेधात्प्राति
पदिकत्वाभावे सुपोऽनुत्पत्त्यापदत्वाभावात्तिङः तिङ इति निघातो न स्यात् अत्र समाधानं अर्थवत्सूत्रेऽधातुग्रहणस्यसा एम
गेन वा करोतीत्यादावदोषः न चाहन्नित्यस्यापि प्रातिपदिकत्वेन लोपापत्तिरिति वाच्यम् नलोपोऽतिङ इति न्यासेन वारणा २०
त् राजीयतीत्यादौ तु न दोषः प्रत्यासत्त्या तिङन्तनिरूपितं यस्य पदत्वं न ॥

न्निमित्तात्सरस्सलोपइत्यर्थोद्रामानित्यादौतुनलोपोन अन्यथातस्माच्छसोलोपः इत्येवब्रूयादितिपण्डिताः वस्तुतस्तुवा
शब्देनिपातसंज्ञाप्राप्ताधातुसंज्ञायावाधिकाभविष्यतिधातुसंज्ञाभवतीत्यादौचरितार्थानिपातसंज्ञाचाहप्रभृतिषुच
रितार्थावाशब्दस्यपरत्वान्निपातसंज्ञैवयापराऽनवकाशाचेत्याकडारादेकेत्यत्रसूत्रेऊकालसूत्रेचभाष्येप्रसिद्धत्वात् अन्तर
ङ्ग-त्वंतुभ्वादिवादिगणसापेक्षत्वेनोभयोःसंज्ञयोःसममेवगणोपस्थितशब्दवाहुल्येनवहिरङ्गतातुधातुसंज्ञायाएव
भुवश्चमहाव्याहृतेरित्यत्रमहाव्याहृतिग्रहणात् यावत्पुरानिपातयोरित्यत्रनिपातग्रहणाच्चनिपात्तेप्रतिपदोक्तव्य
वस्थेतिमनोरमादिग्रन्थकाराशयः प्रातिपदिकसंज्ञायानिपातसंज्ञावाधिकेवाविरोधात् निपातःप्रातिपदिकमिति
विशेषवचनात् रामानित्यादौसस्यलोपस्तुनकृतःसस्यनत्वेनलोपेत्तस्यासिद्धत्वाद्रामममासपतीत्यादौदीर्घागावेतुको
भावार्थत्वात्तस्येति अथधातुग्रहणप्रत्याख्यानेपद्याग्रहस्तवास्तिचेत्तर्हीत्यंन्यस्यतांनलोपःप्रातिपदिकान्तस्ये
ति तावतापिमात्राद्वयलाघवादितितत्त्वप्रकाशिकायांस्पष्टम् ३२ अचःपरस्मिन्पूर्वविधौअत्रशेखरः अत्रसूत्रे
योगेयोऽचूस्थानिकइत्यर्थोनतुसूत्रेस्थानित्वेनोद्देश्यताचस्थानिकइत्यर्थस्तेनणिलोपादेरनेनस्थानिवत्त्वंसि
ध्यतिअतएवचङ्परनिर्ह्रासेणयनामिचित्रवीभवदित्यादिसिध्यर्थोनिषेधःसार्थकःइतिजुहुवइत्यत्रशेखरे।

उ॰प्र॰ क्तप्रयोगः परनिमित्तकत्वाभावेपि शपः परनिमित्तत्वेन परंपरया लोपनिमित्तत्वेन स्थानितयाऽत्रादेशस्याभावेन स्थानिवत्त्वा
२१ भावाच्छवृत्तमाश्रित्य न गुणाइत्युक्तम् तत्सूर्वापरविरुद्धमवस्तुतोऽकारस्ये वश्लुत्वेन स्थानिवत्त्वस्य दुर्वारत्वादिति परिह
त्ताः तत्रेत्थं विरोधपरिहारः साक्षात्परनिमित्तकतातत्र प्रायोगिकस्थानितापरंपरया प्राप्ता यां सोत्र स्थानितेति एवमेव।
हि प्रयोगाणां गतिर्भवति नान्यथेति बोध्यम् यत्तु वेरित्यत्र स्थानिवत्त्वेन उपात्ता च स्थानिसत्त्वाच्चङ्परनिह्रासेइति वचनं
वारिश्मारव्याद्वीवइस्यादौ चरितार्थमतः सूत्रे एवाच्स्थानिक इत्युक्ते सर्वेष्टसिद्धिरित्युक्तम् तन्नादिपदेनाच एव ग्रहणात्।
त्रादेशाभावेनादोषात् अतएव मरुत्तमाचष्टे मारयतीति वृद्धौ कृतायां न स्थानिवद्भाव इति दिक् ३३ इत्युरपक्षावली राम
समाप्तेयं श्रीसम्वत् १९२८ मी॰ श्रावणकृष्ण॥ २ ॥ २१